# BIBLIOTHECA INDICA;

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE PATRONAGE OF THE

**Hon. Court of Directors of the East India Company,**

AND THE SUPERINTENDENCE OF THE

**ASIATIC SOCIETY OF BENGAL.**

EDITED BY DR. E. RÖER.

---

VOL. IX.—NOS. 32 AND 35.

---

# विश्वनाथपञ्चाननकृतसिद्धान्तमुक्तावलीसहित-भाषापरिच्छेदः ॥

---

# DIVISION

OF THE

# CATEGORIES OF THE NYA'YA PHILOSOPHY,

WITH A COMMENTARY

BY

VISWANATHA PANCHA'NANA.

EDITED, AND THE TEXT TRANSLATED FROM THE ORIGINAL SANSCRIT,

BY DR. E. RÖER.

---

CALCUTTA:

PRINTED BY J. THOMAS, BAPTIST MISSION PRESS.

1850.

# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE PATRONAGE OF THE

Hon. Court of Directors of the East India Company,

AND THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL.

EDITED BY DR. E. RÖER.

---

## विश्वनाथपञ्चाननकृतसिद्धान्तमुक्तावलीसहित-
## भाषापरिच्छेदः ॥

---

DIVISION

OF THE

## CATEGORIES OF THE NYA'YA PHILOSOPHY,

WITH A COMMENTARY

BY

VISWANA'THA PANCHA'NANA.

EDITED, AND THE TEXT TRANSLATED FROM THE ORIGINAL SANSCRIT,

BY DR. E. RÖER.

FASCICULUS I.

---

CALCUTTA:

PRINTED BY J. THOMAS, BAPTIST MISSION PRESS.

1850.

# PREFACE.

The Asiatic Society accepted already in 1847 my offer to publish the text of the Nyáya with a translation, but only the Introduction to this work appeared in the Journal of the Society, the MS. of the translation having meanwhile been lost (*vide* Journal of the Asiatic Society, July, 1847). The present translation is based upon a rough copy of the former, which I afterwards found among my papers. The notes are entirely new, and the introduction has received so many additions, that it is almost a new essay. The Sanscrit text, in accordance with an enlarged plan, is now accompanied with its commentary; it will thus form another edition of the one published by the Committee of Public Instruction, which is out of print, and satisfy thereby a desideratum, long felt in the Government Sanscrit Colleges, where the Bháshá Paricchéda is introduced as a class-book.

भाषापरिच्छेदः ॥

मङ्गलाचरणं ॥

ॐ नमो गणेशाय ॥

नूतनजलधररुचये गोपवधूटीदुकूलचौराय ।

---

सिद्धान्तमुक्तावली ॥

मङ्गलाचरणं ॥

ॐ नमो गणेशाय ॥

चूडामणीकृतविधुर्वलयीकृतवासुकिः ।
भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥

प्रतिज्ञा ॥

निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरन्तनोक्तिभिः ।
विशदीकरवाणि कौतुकान्ननु राजीवदयावशम्वदः ॥

ग्रन्थप्रशंसनेन तत्प्रतिपाद्यकथनं ॥

सद्द्रव्या गुणगुम्फिता सुकृतिनां सत्कर्मणां ज्ञापिका
सत्सामान्यविशेषनित्यमिलिता भावप्रकर्षोज्ज्वला ।
विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली
विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरं ॥

विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति ।
नूतनेत्यादि ॥ ननु मङ्गलं न विघ्नध्वंसं प्रति न वा

भाषा० तस्मै नमः कृष्णाय संसारमहीरुहस्य बीजाय ॥

सिद्धा० समाप्तिं प्रति कारणं विनापि मङ्गलं नास्तिकादीनां ग्रन्थे निर्विघ्नपरिसमाप्तिदर्शनादिति चेत् । न । अविगीतशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे तत्र च फलजिज्ञासायां सम्भवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वात् उपस्थितत्वाच्च । समाप्तिरेव हि फलं कल्प्यते । इत्थञ्च यत्र मङ्गलं न दृश्यते तत्रापि जन्मान्तरीयं तत् कल्प्यते । यत्र च सत्यपि मङ्गले समाप्तिर्न दृश्यते तत्र बलवत्तरो विघ्नो विघ्नप्राचुर्यं वा बोध्यं । प्रचुरस्यैव बलवत्तरविघ्ननिराकरणकारणत्वं । विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः । नव्यास्तु मङ्गलस्य विघ्नध्वंस एव फलं । समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापात् । न च स्वतःसिद्धविघ्नविरहवता कृतमङ्गलस्य निष्फलत्वापत्तिरिति वाच्यं । इष्टापत्तेः विघ्नाशङ्कया तदाचरणात् । तथैव शिष्टाचरणाच्च । न च तस्य निष्फलत्वे तद्बोधकशिष्टाचारानुमितवेदाप्रामाण्यापत्तिरिति वाच्यं । सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात् । अत एव पापभ्रमेण कृतप्रायश्चित्तस्य निष्फलत्वेऽपि न तद्बोधकवेदाप्रामाण्यं । मङ्गलन्तु यविघ्नध्वंसविशेषे कारणं । विघ्नध्वंसविशेषे च त्रिसायकस्तवपाठादि । क्वचिच्च विघ्नात्यन्ताभाव एव समाप्तिसाधनं । प्रतिबन्धकसंसर्गाभावस्यैव कार्य्यजनक-

भाषा० द्रव्यं गुणास्तथा कर्म्म सामान्यं सविशेषकं।

सिद्धा० त्वात्। इत्यञ्च नास्तिकादिकृतग्रन्थेषु जन्मान्तरीयस-ङ्कल्पजन्यदुरितध्वंसः स्वतः सिद्धविघ्नात्यन्ताभावो वास्तीति न व्यभिचार इत्याहुः॥ संसारेति। संसार एव महीरुहो वृक्षस्तस्य वीजाय। एतेन ईश्वरे प्रमाणमपि दर्शितं भवति। तथाहि। यथा घटादिकार्य्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि। न च तत् कर्तृत्वमस्मदादीनां सम्भवतीत्यतस्तत्कर्तृत्वेनेश्वरसिद्धिः। न च शरीराजन्यत्वेन कर्त्रजन्यत्वसाधकेन सत्प्रतिपक्ष इति वाच्यं। अप्रयोजकत्वात्। मम तु कर्तृत्वेन कार्य्यत्वेन कार्य्यकारणभाव एव अनुकूलतर्कः। द्यावाभूमी जनयन्देव एक आस्ते विश्वस्य कर्त्ता भुवनस्य गोप्ता इत्यादय आगमा अप्यनुसन्धेयाः॥

पदार्थानामुद्देशमाह। द्रव्यं गुणा इत्यादि। सप्तमस्याभावत्वकथनादेव षण्णां भावत्वं प्राप्तं तेन भावत्वेन पृथगुपन्यासो न कृतः। एते च पदार्था वैशेषिकप्रसिद्धा नैयायिकानामप्यविरुद्धाः। प्रतिपादितञ्चैवमेव भाष्ये। अत एव उपमानचिन्तामणौ सप्तपदार्थभिन्नतया शक्तिसादृश्ययोरतिरिक्तपदार्थत्वमाशङ्कितं। ननु कथमेत एव पदार्थाः शक्तिसादृश्यादीनामप्यतिरिक्तपदार्थत्वात्। तथाहि। मण्यादिसमवहितेन वह्निना दाहो न जन्यते तच्छून्येन तु जन्यते। तत्र मण्यादिना

भाषा० समवायस्तथाऽभावः पदार्थाः सप्त कीर्त्तिताः ॥ १ ॥
क्षित्यप्तेजो मरुद्व्योमकाला दिग्देहिनौ मनः ।

---

सिद्धा० वह्नौ दाहानुकूला शक्तिर्नाश्यते उत्तेजकेन मण्याद्यपसरणेन च जन्यत इति कल्प्यते । एवं सादृश्यमप्यतिरिक्तः पदार्थः । तद्धि न षट्पदार्थेष्वन्तर्भवति सामान्येऽपि सत्त्वात् । यथा गोत्वं नित्यं तथा अश्वत्वमपीति सादृश्यप्रतीतेः । नाप्यभावे । सत्त्वेन प्रतीयमानत्वादिति चेत् । न । मण्याद्यभावविशिष्टवह्न्यादेर्दाहादिकं प्रति स्वातन्त्र्येण मण्यभावादेरेव वा हेतुत्वकल्पनेन सामञ्जस्ये अनन्तशक्तितत्प्रागभावध्वंसकल्पनानौचित्यात् । न चोत्तेजके सति मणिप्रतिबन्धकसद्भावेऽपि कथं दाह इति वाच्यं । उत्तेजकाभावविशिष्टमणिसामान्याभावस्य हेतुत्वात् । सादृश्यमपि न पदार्थान्तरं किन्तु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं । यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्त्वं मुखे चन्द्रसादृश्यमिति ॥ १ ॥

द्रव्याणि विभजते । क्षित्यप्तेति । एतानि नव द्रव्याणि इत्यर्थः । ननु द्रव्यत्वजातौ किं मानं । न हि तत्र प्रत्यक्षं प्रमाणं घृतजतुप्रभृतिषु द्रव्यत्वाग्रहादिति चेत् । न । कार्य्यसमवायिकारणतावच्छेदकतया संयोगस्य विभागस्य वा समवायिकारणतावच्छेदकतया तत्सिद्धेरिति ॥ ननु दशमं द्रव्यन्तमः कुतो नोक्तं ।

भाषा॰ द्रव्याण्य ऽथ गुणा रूपं रसो गन्धस्ततः परं ॥ २ ॥
स्पर्शः संख्या परिमितिः पृथक्त्वञ्च ततः परं ।
संयोगश्च विभागश्च परत्वञ्चापरत्वकं ॥ ३ ॥
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकं ।
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥ ४ ॥
उत्क्षेपणं ततोऽवक्षेपनमाकुञ्चनं तथा ।
प्रसारणञ्च गमनं कर्माण्येतानि पञ्च च ॥ ५ ॥
भ्रमणं रेचनं स्यन्दनोर्द्धज्वलनमेव च ।

---

सिद्धा॰ तद्धि प्रत्यक्षेण गृह्यते । तस्य च रूपवत्त्वात् कर्मवत्त्वाच्च द्रव्यत्वं । तच्च गन्धशून्यत्वात् न पृथिवी । नीलरूपवत्त्वाच्च न जलादिकं । तत्प्रत्यक्षे चालोकनिरपेक्षं चक्षुः कारणं इति चेत् । न । आवश्यकतेजोऽभावेनोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वात् । रूपवत्ताप्रतीतिस्तु भ्रमरूपा । कर्मवत्त्वप्रतीतिरपि आलोकापसारणौपाधिकी भ्रान्तिरेव । तमसोऽतिरिक्तत्वेऽनन्तावयवादिकल्पनागौरवञ्च स्यात् । स्वर्णस्य यथा तेजस्त्वन्तर्भावस्तथा वक्ष्यते ॥

गुणान् विभजते । अथ गुणा इति । एते गुणाश्चतुर्विंशतिसङ्ख्यकाः कणादेन कण्ठतश्चशब्देन च दर्शिताः । तत्र गुणत्वादिकजातिसिद्धिरग्रे वक्ष्यते ॥ २ ॥ ३ ॥ ४ ॥

कर्माणि विभजते । उत्क्षेपणमिति । कर्मत्वजातिस्तु प्रत्यक्षसिद्धा । एवमुत्क्षेपणत्वादिकमपि । नन्वत्र भ्रम-

भाषा० तीर्थ्यगमनमप्यत्र गमनादेव लभ्यते॥ ६ ॥
सामान्यं द्विविधं प्रोक्तं परञ्चापरमेव च।
द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते॥ ७॥
परभिन्ना च या जातिः सैवापरतयोच्यते।

---

सिद्धा० णादिकमपि पञ्चकर्माधिकतया कुतो नोक्तमत आह। भ्रमणमित्यादि ॥ ५ ॥ ६ ॥

सामान्यं निरूपयति। सामान्यमिति। तल्लक्षणन्तु नित्यत्वे सत्यनेकसमवेतत्वं। अनेकसमवेतत्वं संयोगादीनामप्यस्तीत उक्तं। नित्यत्वे सतीति। नित्यत्वे सति समवेतत्वं गगणपरिमाणादीनामप्यस्तीत उक्तं। अनेकेति। नित्यत्वे सत्यनेकवृत्तित्वमत्यन्ताभावे ऽप्यस्तीतो वृत्तित्वसामान्यं विहाय समवेतत्वमित्युक्तं। एकमात्रव्यक्तिवृत्तिस्तु न जातिः। तथाचोक्तं। व्यक्तेरभेदस्तुल्यत्वं सङ्करो ऽथानवस्थितिः। रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः॥ एकव्यक्तिकत्वादाकाशत्वं न जातिः। तुल्यव्यक्तिकत्वात् घटत्वं कलसत्वं न जातिद्वयं। सङ्कीर्णत्वात् भूतत्वं मूर्त्तत्वं न जातिः। अनवस्थाभयात् सामान्यत्वं न जातिः। विशेषस्य व्यावृत्तस्वभावस्य रूपहानिः स्यादतो विशेषत्वं न जातिः। समवायसम्बन्धाभावात् समवायो न जातिः॥ द्रव्यादीति। परत्वं अधिकदेशवृत्तित्वं। अपरत्वं अल्पदेशवृत्तित्वं।

भाषा० द्रव्यत्वादिकजातिस्तु परापरतयोच्यते॥ ८॥
व्यापकत्वात् परापि स्याद्व्याप्यत्वादपरापि च।
अन्त्यो नित्यद्रव्यवृत्तिर्व्विशेषः परिकीर्त्तितः॥ ९॥
घटादीनां कपालादौ द्रव्येषु गुणकर्म्मणोः।

---

सिद्धा० सकलजात्यपेक्षयाऽधिकदेशवृत्तित्वात् सत्तायाः परत्वं। एतद्बोधनायैव द्रव्यादित्रिकवृत्तिरित्युक्तं। तदपेक्षया चान्यासां जातीनामपरत्वं। परभिन्ना सत्ताभिन्ना। व्यापकत्वादिति॥ ७॥ ८॥

पृथिवीत्वाद्यपेक्षया व्यापकत्वादधिकदेशवृत्तित्वात् द्रव्यत्वादेः परत्वं। सत्तापेक्षया व्याप्यत्वात् अल्पदेशवृत्तित्वाच्च द्रव्यत्वस्यापरत्वं। तथाच धर्म्मद्वयसमावेशादुभयमविरुद्धं॥

विशेषं निरूपयति। अन्त्य इति। अन्ते अवसाने वर्त्तत इत्यन्त्यः। यदपेक्षया विशेषो नास्तीत्यर्थः। एकमात्रवृत्तिरिति फलितार्थः। घटादीनां द्व्यणुकपर्य्यन्तानां तत्तदवयवभेदात् परस्परं भेदः। परमाणूनां परस्परभेदको विशेष एव। स तु स्वत एव व्यावृत्तः। तेन तत्र विशेषान्तरापेक्षा नास्तीति भावः॥ ९॥

समवायं दर्शयति। घटादीनामिति। अवयवावयविनोर्ज्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्न्नित्यद्रव्यविशेषयोश्च यः सम्बन्धः स समवायः। समवायत्वं

भाषा० तेषु जातेश्च सम्बन्धः समवायः प्रकीर्त्तितः ॥ १० ॥
अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः ।

---

सिद्धा० नित्यसम्बन्धत्वं । तत्र प्रमाणन्तु गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात् दण्डी पुरुष इति विशिष्टबुद्धिवत् इत्यनुमानं । तत्र संयोगादिबाधात् समवायसिद्धिः । न च स्वरूपसम्बन्धेन सिद्धसाधनं अर्थान्तरं वा । अनन्तस्वरूपाणां सम्बन्धत्वकल्पने गौरवात् । लाघवादेकसमवायसिद्धिः । न च समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिप्रसङ्गः । तत्र रूपसमवायसत्त्वेऽपि रूपाभावात् । न चैवं अभावस्य वैशिष्ट्यं सम्बन्धान्तरं सिध्येदिति वाच्यं । तस्य नित्यत्वे भूतले घटानयनानन्तरमपि घटाभावबुद्धिप्रसङ्गात् । घटाभावसम्बन्धस्य तत्र सत्त्वात् तस्य नित्यत्वात् । अन्यथा देशान्तरेऽपि तत्प्रतीतिर्न स्यात् । वैशिष्ट्यस्य च तत्र सत्त्वात् । मम तु मते घटे पाकरक्ततादशायां श्यामरूपस्य नष्टत्वान्न तद्वत्ताबुद्धिः । वैशिष्ट्यस्यानित्यत्वे त्वनन्तवैशिष्ट्यकल्पने तवैव गौरवं । इत्यञ्च तत्तत्कालीनतत्तद्भूतलादिकं तत्तदभावानां सम्बन्धः ॥ १० ॥

अभावं विभजते । अभावस्त्विति । अभावत्वं द्रव्यादिषट्कान्योन्याभावत्वं । संसर्गेति । संसर्गाभावान्योन्याभावभेदादित्यर्थः ॥ अन्योन्याभावस्यैकविधत्वात्तद्वि-

भाषा० प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च॥ ११॥

---

सिद्धा० मागाभावात् संसर्गाभावं विभजते। प्रागभाव इति। संसर्गाभावत्वं अन्योन्याभावभिन्नाभावत्वं। अन्योन्याभावत्वं तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वं। विनाश्यभावत्वं प्रागभावत्वं। जन्याभावत्वं ध्वंसत्वं। नित्यसंसर्गाभावत्वं अत्यन्ताभावत्वं। यत्र तु भूतलादौ घटादिकमपसारितं पुनरानीतञ्च तत्र घटकालस्य सम्बन्धाघटकतया अत्यन्ताभावस्य नित्यत्वेऽपि घटकाले न घटात्यन्ताभावबुद्धिः। तत्र उत्पादविनाशशाली चतुर्थोऽयमभाव इति केचित्। अत्र ध्वंसप्रागभावयोरधिकरणे नात्यन्ताभाव इति प्राचीनमतं। श्यामघटे रक्तो नासीति रक्तघटे श्यामो नासीति धीश्च प्रागभावं ध्वंसञ्चावगाहते न तु तदत्यन्ताभावं। नव्यास्तु तत्र विरोधे मानाभावात् ध्वंसादिकालावच्छेदेनाप्यत्यन्ताभावो वर्त्तत इति प्राहुः। नन्वस्तु अभावानामधिकरणात्मकत्वं लाघवादिति चेत्। न। अनन्ताधिकरणात्मकत्वकल्पनामपेक्ष्यातिरिक्तकल्पनाया एव लघीयस्त्वात्। एवञ्च आधाराधेयभावोऽप्युपपद्यते। एवञ्च तत्तच्छब्दगन्धरसाद्यभावानां प्रत्यक्षत्वमुपपद्यते। अन्यथा तत्तदधिकरणानां तत्तदिन्द्रियाणामग्राह्यत्वादप्रत्यक्षत्वं स्यात्। एतेन ज्ञान-

भाषा० एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते।
सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते॥१२॥
द्रव्यादयः पञ्च भावा अनेके समवायिनः।

---

सिद्धा० विशेषकालविशेषाद्यात्मकत्वमत्यन्ताभावस्येति प्रत्युक्तं। अप्रत्यक्षत्वापत्तेः॥ ११॥

इदानीं पदार्थानां साधर्म्यं वैधर्म्यञ्च वक्तुं प्रक्रमते। सप्तानामित्यादि। समानो धर्मो येषां ते सधर्माणस्तेषां भावः साधर्म्यं। समानो धर्म इति फलितार्थः। एवं विरुद्धो धर्मो येषां ते विधर्माणस्तेषां भावो वैधर्म्यं। विरुद्धो धर्म इति फलितार्थः। ज्ञेयत्वं ज्ञानविषयता। सा च सर्व्वत्रैवास्ति। ईश्वरादिज्ञानविषयतायाः केवलान्वयित्वात्। एवं अभिधेयत्वप्रमेयत्वादिकं बोध्यं॥ १२॥

द्रव्येति। द्रव्यगुणकर्मसामान्यविशेषाणां साधर्म्यमनेकत्वं *भावत्वं समवायित्वञ्च। यद्यप्यनेकत्वं अभावेऽप्यस्ति तथाप्यनेकत्वे सति भावत्वं पञ्चानां साधर्म्यं। तथाच अनेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वं फलितार्थः। तेन घटादौ प्रत्येकं नाव्याप्तिः। समवायित्वं समवायसम्बन्धेन सम्बन्धित्वं न तु समवायवत्त्वं। सामान्यादावभावात्। तथाच समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं फलितार्थः। तेन नित्यद्रव्येषु नाव्याप्तिः

---

* अपूर्व्वमुद्रितमिदं।

भाषा० सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥ १३ ॥
सामान्यपरिहीनास्तु सर्व्वे जात्यादयो मताः ।

---

सिद्धा० सत्तावन्त इति द्रव्यगुणकर्म्मणां सत्तावत्त्वमित्यर्थः । गुणादिरिति । यद्यपि गुणक्रियाशून्यत्वमाद्यक्षणे घटादावतिव्याप्तं क्रियाशून्यत्वञ्च गगनादावतिव्याप्तं तथापि गुणवद्वृत्तिधर्म्मवत्त्वं कर्म्मवद्वृत्तिपदार्थविभाजकोपाधिमत्त्वं तदर्थः । न हि घटत्वादिकं द्रव्यत्वं वा गुणवद्वृत्ति कर्म्मवद्वृत्ति वा किन्तु गुणत्वादिकं । तथा आकाशत्वादिकन्तु न पदार्थविभाजकोपाधिः * ॥ १३ ॥

सामान्येति । सामान्यानधिकरणत्वं सामान्यादीनामित्यर्थः ॥ पारिमाण्डल्येति । पारिमाण्डल्यं अणुपरिमाणं । कारणत्वं तद्भिन्नानामित्यर्थः । अणुपरिमाणं न तु कस्यापि कारणं । तद्धि स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवेत् । तच्च न सम्भवति । परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वात् । महदारब्धस्य महत्तरत्ववत् । अणुजन्यस्याणुतरत्वप्रसङ्गाच्च । एवं परममहत्परिमाणं अतीन्द्रियसामान्यं विशेषा-

---

* यद्वा गुणवद्वृत्तित्वे सति कर्म्मवद्वृत्तित्वे सति वा सत्ताव्याप्यजातिशून्याभावत्वं विवक्षितं । गुणकर्म्मणोरव्याप्तिवारणाय सत्ता व्याप्येति । व्याप्तिश्च भेदगर्भा विवक्षिता इत्यतो न दोषः । द्रव्यगुणान्यतरत्वमादाय तत्रैवाव्याप्तिवारणाय जातीति । अभावेऽतिव्याप्तिवारणाय भावत्वमिति । गुणवद्वृत्तिः सत्ताव्याप्यजातिर्द्रव्यत्वं तच्छून्यत्वं घटाभावस्येवेन । पूर्व्वमुद्रितोऽयेन पाठः प्रकृतानुपयोगित्वात् पुस्तकान्तरात्लिखितावापो मुद्रितः ।

भाषा० परिमाणडन्यभिन्नानां कारणत्वमुदाहृतं ॥ १४ ॥
अन्यथासिद्धिशून्यस्य नियता पूर्व्ववर्त्तिता ।
कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्त्तितं ॥ १५ ॥
समवायिकारणत्व ज्ञेयमथाप्यसमवायिहेतुत्वं ।
एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वं ॥ १६ ॥

---

सिद्धा० स्येति बोध्यं । इदमपि योगिप्रत्यक्षे विषयस्य न कारणत्वं । ज्ञायमानसामान्यं न प्रत्यासत्तिः । ज्ञायमानं लिङ्गं नानुमितिकारणं इत्यभिप्रायेण मानसप्रत्यक्षे आत्ममहत्त्वस्य कारणत्वात् महत्परिमाणं कालादेर्बोध्यं तस्यापि न कारणत्वमित्याचार्य्याणामाशय इत्यन्ये । तन्न । ज्ञानातिरिक्तं प्रति कारणताया एव आचार्य्यैरुक्तत्वात् ॥ १४ ॥

ननु कारणत्वं किमत आह । अन्यथेति । तस्य कारणत्वस्य ॥ १५ ॥

तत्र समवायिकारणे । आसन्नं प्रत्यासन्नं कारणं द्वितीयमसमवायिकारणमित्यर्थः । अत्र यद्यपि तुरीतन्तुसंयोगानां पटासमवायिकारणत्वं स्यात् एवं वेगादीनामपि अभिघाताद्यसमवायिकारणत्वं स्यात् एवं ज्ञानादिकमिच्छाद्यसमवायिकारणं स्यात् तथापि पटासमवायिकारणलक्षणे तुरीतन्तुसंयोगभिन्नत्वं देयं । तुरीतन्तुसंयोगस्तु तुरीपटसंयोगं प्रत्यसमवायिकारणं भवत्येव । एवं वेगादिकं वेगस्पन्दाद्यसमवायिकारणं

भाषा० यत् समवेतं कार्य्यं भवति ज्ञेयन्तु समवायिजनकं तत्।
तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात्॥१७॥
येन सह पूर्व्वभावः कारणमादाय वा यस्य।

---

सिद्धा० भवत्येवेति तत्तत्कार्य्यासमवायिकारणलक्षणे तत्तद्भिन्नत्वं न देयं। आत्मविशेषगुणानान्तु कुत्राप्यसमवायिकारणत्वं नास्ति। तेन तद्भिन्नत्वं सामान्यलक्षणे देयमेव। अत्र समवायिकारणप्रत्यासन्नं द्विविधं कार्य्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या च। आद्यं यथा घटादिकं प्रति कपालसंयोगादिकं। तत्र कार्य्येण घटेन सह कारणस्य कपालसंयोगस्य एकस्मिन् कपाले प्रत्यासत्तिरस्ति। द्वितीयं यथा घटरूपं प्रति कपालरूपमसमवायिकारणं। तत्र घटरूपं प्रति कारणं घटः। तेन सह कपालरूपस्य एकस्मिन् कपाले प्रत्यासत्तिरस्ति। तथा च क्वचित् समवायसम्बन्धेन क्वचित् स्वसमवायिसमवायसम्बन्धेनेति फलितार्थः। इत्यञ्च कार्य्ये कार्य्यकारणैकार्थान्यतरप्रत्यासत्त्या कारणं ज्ञानादिभिन्नमसमवायिकारणमिति सामान्यलक्षणं पर्य्यवसन्नं। आभ्यां समवायिकारणासमवायिकारणाभ्यां भिन्नं कारणं तृतीयं निमित्तकारणमित्यर्थः॥ १६॥१७॥

इदानीमन्यथासिद्धत्वमेव कियतां पदार्थानां तदाह। येन सहेत्यादिना। यत्कार्य्यं प्रति कारणस्य

भाषा० अन्यं प्रति पूर्व्वभावे ज्ञाते यत् पूर्व्वभावविज्ञानं ॥१८॥
जनकं प्रति पूर्व्ववर्त्तितामपरिज्ञाय न यस्य गृह्यते ।

---

सिद्धा० पूर्व्ववर्त्तिता येन रूपेण गृह्यते तत्कार्य्यं प्रति तद्रूपमन्यथासिद्धमिति भावः । यथा घटं प्रति दण्डत्वमिति ॥ द्वितीयमन्यथासिद्धमाह । कारणमिति । यस्य स्वातन्त्र्येणान्वयव्यतिरेकौ न स्तः किन्तु स्वकारणमादायैव अन्वयव्यतिरेकौ गृह्येते तदन्यथासिद्धं । यथा दण्डरूपं ॥ तृतीयमाह । अन्यं प्रतीति । अन्यं प्रति पूर्व्ववर्त्तित्वं गृहीत्वैव यस्य यत्कार्य्यं प्रति पूर्व्ववर्त्तित्वं गृह्यते तस्य तत्कार्य्यं प्रत्यन्यथासिद्धत्वं । यथा घटादिकं प्रत्याकाशस्य । आकाशस्य हि घटादिकं प्रति आकाशत्वेन कारणत्वं स्यात् । आकाशत्वं शब्दसमवायिकारणत्वं । अतः शब्दं प्रति जनकत्वं गृहीत्वैव घटादिकं प्रति जनकत्वं ग्राह्यमतस्तदन्यथासिद्धं । शब्दाश्रयत्वेन कारणत्वे कान्यथासिद्धिरिति चेत् । पञ्चमीति गृहाण । अथाकाशस्य शब्दं प्रति जनकत्वे किमवच्छेदकमिति चेत् । कवत्वादिकं विशेषपदार्थो वेति ॥ १८ ॥

चतुर्थमन्यथासिद्धमाह । जनकं प्रतीति । यत्कार्य्यजनकं प्रति पूर्व्ववर्त्तित्वं गृहीत्वैव यस्य यत्कार्य्यं प्रति पूर्व्ववर्त्तित्वं गृह्यते तस्य तत्कार्य्यं प्रत्यन्यथासिद्धत्वं । यथा कुलालपितुर्घटं प्रति । तस्य कुलालपितृत्वेन

भाषा० अतिरिक्तमथापि यन्नवेन्नियतावश्यकपूर्व्वभाविनः॥१९॥
एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमं।
घटादौ दण्डरूपादि द्वितीयमपि दर्शितं॥ २०॥
तृतीयन्तु भवेद्व्योम कुलालजनकोऽपरः।

---

सिद्धा० घटं प्रति जनकत्वेऽन्यथासिद्धिः। कुलालत्वेन जनकत्वे त्विष्टापत्तिः। कुलालमात्रस्य घटं प्रति जनकत्वात्॥ पञ्चममन्यथासिद्धमाह। अतिरिक्तमिति॥ नियतावश्यकपूर्व्वभाविनः। अवश्यक्लृप्तनियतपूर्व्ववर्त्तिन एव कार्य्यसम्भवे तद्भिन्नमन्यथासिद्धमित्यर्थः। अत एव प्रत्यक्षे महत्त्वं कारणमनेकद्रव्यवत्त्वमन्यथासिद्धं। तत्र हि महत्त्वमवश्यं क्लृप्तं। तेनानेकद्रव्यवत्त्वमन्यथासिद्धं। न च वैपरीत्ये किं विनिगमकमिति वाच्यं। महत्त्वत्वजातेः कारणतावच्छेदकत्वे लाघवात्॥ १९॥

रासभादिरिति। यद्घटव्यक्तिं प्रति रासभस्य नियतपूर्व्ववर्त्तित्वमस्ति तत्रापि घटजातीयं प्रति सिद्धकारणभावैर्दण्डादिभिरेव तद्व्यक्तेरपि सम्भवे रासभोऽन्यथासिद्ध इति भावः॥ एतेष्विति। एतेषु पञ्चस्वन्यथासिद्धेषु मध्ये पञ्चमोऽन्यथासिद्ध आवश्यकः। तेनैव परेषां चरितार्थत्वात्। तथा हि दण्डादिभिरवश्यक्लृप्तनियतपूर्व्ववर्त्तिभिरेव कार्य्यसम्भवे दण्डत्वादिकमन्यथासिद्धं। न च वैपरीत्ये किं विनिगमकमिति

भाषा० पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ ॥ २१ ।
समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयं ।
गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वं ॥ २२ ॥
अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते ।
क्षित्यादीनां नवानान्तु द्रव्यत्वगुणयोगिता ॥ २३ ॥

---

सिद्धा० वाच्यं । दण्डत्वस्य कारणत्वे दण्डघटितपरम्परायाः सम्बन्धत्वकल्पने गौरवात् । एवमन्येषामप्यनेन चरितार्थत्वसम्भवात् ॥ २० ॥ २१ ॥

समवायिकारणत्वमिति । गुणकर्मेति । असमवायिकारणत्वं गुणकर्मभिन्नानां वैधर्म्यं नतु गुणकर्मणोः साधर्म्यं इत्यत्रापि तात्पर्य्यं । अथवा असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्वं तदर्थः । तेन ज्ञानादीनामपि असमवायिकारणत्वविरहेऽपि न क्षतिः ॥ २२ ॥

अन्यत्रेति । नित्यद्रव्याणि परमाण्वाकाशादीनि विहायाश्रितत्वं साधर्म्यमित्यर्थः । आश्रितत्वन्तु समवायसम्बन्धेन वृत्तिमत्त्वं । विशेषणतया नित्यानामपि कालादौ वृत्तेः । कालिकसम्बन्धान्यसम्बन्धेन तेषामवृत्तित्वमिति परमार्थः । तेन समवाया*भावयोः समवायेनावृत्तावपि न क्षतिः ॥ इदानीं द्रव्यस्यैव विशिष्य साधर्म्यं वक्तुमारभते । क्षित्यादीनामिति ॥ २३ ॥

---

* साङ्कितपूर्व्वमिति ।

भाषा० क्षितिर्जलं तथा तेजः पवनो मन एव च।
परापरत्वमूर्त्तत्वक्रियावेगाश्रया अमी ॥ २४ ॥
कालखात्मदिशां सर्व्वगतत्वं परमं महत्।

सिद्धा० क्षितिर्जलमिति । पृथिव्यप्तेजोवायुमनसां परत्वापरत्ववत्त्वं मूर्त्तत्वं क्रियावत्त्वं वेगवत्त्वञ्च साधर्म्यं । न च यत्र घटादौ परत्वमपरत्वं वा नोत्पन्नं तत्राव्याप्तिरिति वाच्यं । परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । मूर्त्तत्वं अपकृष्टपरिमाणवत्त्वं । तच्च तेषामेव गगनादिपरिमाणस्य कुतोऽप्यपकृष्टत्वाभावात् पूर्व्ववत् कर्म्मवत्त्वं* वेगवत्त्वं कर्म्मसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं वेगवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वञ्च बोध्यं ॥ २४ ॥

कालेति । कालाकाशात्मदिशां सर्व्वगतत्वं सर्व्वमूर्त्तसंयोगित्वं परममहत्त्वञ्च । परममहत्त्वं जातिविशेषोऽपकर्षानाश्रयपरिमाणत्वं वा । क्षित्यादीति । पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वं । तच्च वहिरिन्द्रियग्राह्यविशेषगुणवत्त्वं । अत्र ग्राह्यत्वं लौकिकप्रत्यक्षस्वरूपयोग्यत्वं बोध्यं । तेन ज्ञातो घट इत्यादिप्रत्यक्षे ज्ञानस्याप्युपनीतभानविषयत्वात् तद्वति आत्मनि नातिप्रसङ्गः । न वा प्रत्यक्षाविषयरूपादिमति परमाणा-

* अपूर्व्वगृहीतमिदं ।

भाषा० क्षित्यादिपञ्च भूतानि चत्वारि स्पर्शवन्ति हि ॥ २५ ॥
द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणां ।

---

सिद्धा० दावव्याप्तिः । तस्यापि स्वरूपयोग्यत्वात् महत्त्वसमवकारणान्तरासन्निधानाच्च न प्रत्यक्षं । अथवा आत्मावृत्तिविशेषगुणवत्त्वं तत्त्वं ॥ चत्वारीति । पृथिव्यप्तेजोवायूनां स्पर्शवत्त्वं ॥ २५ ॥

द्रव्यारम्भ इति । पृथिव्यप्तेजोवायुषु चतुर्षु द्रव्यारम्भकत्वं । न च द्रव्यानारम्भके घटादावव्याप्तिः । द्रव्यसमवायिकारणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ॥ आकाशशरीरिणामिति । आकाशात्मनामव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वं ॥ आकाशस्य विशेषगुणः शब्दः । स चाव्याप्यवृत्तिः । यदा किञ्चिदवच्छेदेन शब्द उत्पद्यते तदन्यावच्छेदेन तदभावस्यापि सत्त्वात् । क्षणिकत्वञ्च तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वं । योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वात् प्रथमशब्दस्य द्वितीयशब्देन नाशः ॥ एवं ज्ञानादीनामपि । ज्ञानादिकं हि आत्मनि विभौ शरीराद्यवच्छेदेनोत्पद्यते । घटाद्यवच्छेदेन तदभावोऽस्त्येव । एवं ज्ञानादिकमपि क्षणद्वयावस्थायि । इत्यस्याव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वञ्चार्थः ॥ पृथिव्यादौ रूपादिर्विशेषगुणोऽस्तीत्यतोऽव्याप्यवृत्तिरित्युक्तं ।

भाषा० अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ॥ २६ ॥
रूपद्रव्यत्वप्रत्यक्षयोगि स्यात् प्रथमत्रिकं ।

---

सिद्धा० पृथिव्यादावव्याप्यवृत्तिसंयोगादिरस्तीत्यतो विशेषगुण इत्युक्तं । न च रूपादीनामपि कदाचित् तृतीयक्षणे नाशसम्भवात् क्षणिकविशेषगुणवत्त्वं क्षित्यादावतिव्याप्तमिति वाच्यं । चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वस्य विवक्षितत्वात्। अपेक्षाबुद्धिः क्षणत्रयं तिष्ठति । क्षणचतुष्टयन्तु किमपि ज्ञानादिकं न तिष्ठति । रूपत्वादिकन्तु क्षणचतुष्टयस्थायिन्यपि रूपादौ वर्त्तत इति व्युदासः । ईश्वरज्ञानस्य चतुःक्षणवृत्तित्वाज् जन्येत्युक्तं । यद्याकाशजीवात्मनोः साधर्म्यं तदा जन्येति न देयं द्वेषत्वादिकमादाय लक्षणसमन्वयात् परममहत्त्वस्य तादृशगुणत्वाच्च । चतुर्थक्षणे द्वित्वादीनामपि नाशाभ्युपगमाद् द्वित्वादीनामपि तथात्वात् तद्वारणाय विशेषेति त्रिक्षणवृत्त्यवृत्तित्वं वा वाच्यं । द्वेषत्वादिकमादायात्मनि लक्षणसमन्वयात्॥ २६ ॥

रूपेति। पृथिव्यप्तेजसां रूपवत्त्वं द्रव्यत्ववत्त्वं प्रत्यक्षविषयत्वञ्चेत्यर्थः । न च चक्षुरादीनां भर्जनकपालस्थवह्नेरूष्मणश्च रूपवत्त्वे किंमानमिति वाच्यं । तत्रापि तेजस्त्वेन रूपानुमानात्। एवं वाय्वानीतपृथिवीजलतेजोभागानामपि पृथिवीत्वादिना रूपानुमानं बोध्यं।

भाषा० गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥ २७ ॥
आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः ।
यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ॥ २८ ॥

---

सिद्धा० न च पटादौ द्रुतसुवर्णादिभिन्ने तेजसि च द्रवत्ववत्त्वमव्याप्तमिति वाच्यं । द्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । घृततैलप्रभृतिषु पृथिवीषु जलेषु द्रुतसुवर्णादौ तेजसि च द्रवत्वसत्त्वात् । तत्र च पृथिवीत्वादिमत्त्वात्तदादाय सर्वत्र लक्षणसमन्वयः । न च प्रत्यक्षविषयत्वं परमाण्वादावव्याप्तं अतिव्याप्तञ्च रूपादाविति वाच्यं । चाक्षुषप्रत्यक्षविषयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । आत्मन्यतिव्याप्तिवारणाय चाक्षुषेति ॥ गुरुणी इति । गुरुत्ववत्त्वं रसवत्त्वं पृथिवीजलयोरित्यर्थः । न च घ्राणेन्द्रियादीनां वाय्वानीतपार्थिवादिभागानाञ्च रसादिमत्त्वे किं मानमिति वाच्यं । तत्रापि पृथिवीत्वादिना तदनुमानात् ॥ द्वयोरिति पृथिवीतेजसोरित्यर्थः । न च नैमित्तिकद्रवत्ववत्त्वं घटादौ वह्न्यादौ चाव्याप्तमिति वाच्यं नैमित्तिकद्रवत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ॥ २७ ॥

आत्मान इति । पृथिव्यप्तेजोवाय्वाकाशात्मनां विशेषगुणवत्त्वमित्यर्थः । यदुक्तमिति । ज्ञेयत्वादिकं वि-

भाषा० स्पर्शादयोऽष्टौ वेगाख्यसंस्कारो मरुतो गुणाः ।
अष्टौ स्पर्शादयो रूपं द्रवो वेगश्च तेजसि ॥ २९ ॥
स्पर्शादयोऽष्टौ वेगश्च गुरुत्वञ्च द्रवत्वकं ।
रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ॥ ३० ॥
स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश ।
बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा ॥ ३१ ॥
धर्म्माधर्म्मौ गुणा एते आत्मनः स्युश्चतुर्दश ।
सङ्ख्यादि पञ्चकं कालदिशोः शब्दश्च ते च खे ॥ ३२ ॥
संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे ।
परापरत्वसङ्ख्याद्याः पञ्च वेगश्च मानसे ॥ ३३ ॥
तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता ।

---

सिद्धा० शय इति बोध्यं । तत्तु न कस्यापि वैधर्म्यं । केवला-न्वयित्वात् । ते च सङ्ख्यादयः पञ्च खे आकाशे ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

साधर्म्यवैधर्म्ये निरूप्य सम्प्रति प्रत्येकं पृथिव्यादिकं निरूपयति । तत्र क्षितिरित्यादिना । गन्धहेतुरिति गन्धसमवायिकारणमित्यर्थः । यद्यपि गन्धवत्त्वमात्रं लक्षणमुचितं तथापि पृथिवीत्वजातौ प्रमाणोपन्यासाय कारणत्वमुपन्यस्तं । तथाहि पृथिवीत्वं हि गन्धसमवायिकारणतावच्छेदकतया सिध्यति । अन्यथा

भाषा० षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः ॥ ३४ ॥

---

सिद्धा० गन्धत्वावच्छिन्नस्याकस्मिकत्वापत्तेः । न च पाषाणादौ गन्धाभावाद्गन्धवत्त्वमव्याप्तमिति वाच्यं । तत्रापि गन्धसत्त्वात् । अनुपलब्धिस्तु अनुत्कटत्वेनाप्युपपद्यते । कथमन्यथा तद्भस्मनि गन्ध उपलभ्यते । भस्मनो हि पाषाणध्वंसजन्यत्वात् । पाषाणोपादानोपादेयत्वं सिध्यति । यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्तेः । दृष्टञ्चैतत् खण्डपटे महापटध्वंसजन्ये । इत्यञ्च पाषाणपरमाणोः पृथिवीत्वात्तज्जन्यस्य पाषाणस्यापि पृथिवीत्वं । तथाच तस्यापि गन्धवत्त्वे बाधकाभावः ॥ नानारूपेति । शुक्लनीलादिभेदेन नानाजातीयं रूपं पृथिव्यामेव वर्त्तते न तु जलादौ । तत्र शुक्लस्यैव सत्त्वात् । पृथिव्यान्तु एकस्मिन्नपि धर्म्मिणि पाकवशेन नानारूपसम्भवात् । न च यत्र नानारूपं नोत्पन्नं तत्राव्याप्तिः । रूपद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य रूपनाशवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य वा वाच्यत्वात् । वैशेषिकनये पृथिवीपरमाणौ रूपनाशस्य रूपान्तरस्य च सत्त्वात् । न्यायनये घटादावपि तत्सत्त्वात्लक्षणसमन्वयः ॥ षड्विध इति । मधुरकटुकषायादिभेदेन यः षड्विधो रसः स पृथिव्यामेव । जले च मधुर एव रसः । अत्रापि पूर्व्ववद्रसद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं रस-

भाषा० स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः।
नित्याऽनित्या च सा द्वेधा नित्या स्यादणुलक्षणा॥३५॥

---

सिद्धा० नाशवद्वृत्तिव्याप्यजातिमत्त्वं वा लक्षणार्थोऽवसेयः। गन्धस्त्विति॥ द्विविध इति। वस्तुस्थितिमात्रं न तु द्विविधगन्धवत्त्वं लक्षणं। द्विविधस्य व्यर्थत्वात्। द्वैविध्यञ्च सौरभासौरभभेदेन बोध्यं॥ ३४॥

स्पर्श इति। तस्याः पृथिव्याः। अनुष्णाशीतस्पर्शवत्त्वं वायोरपि वर्त्तत इत्युक्तं॥ पाकज इति। इत्थञ्च पृथिव्याः स्पर्शोऽनुष्णाशीतताज्ञापनार्थं तदुक्तं। वस्तुतस्तु पाकजस्पर्शवत्त्वमात्रं लक्षणं। अधिकस्य वैयर्थ्यात्। यद्यपि पाकजस्पर्शो घटादौ नास्ति तथापि पाकजस्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमर्थो बोध्यः॥ नित्येति। सा पृथिवी द्विविधा नित्या अनित्या चेत्यर्थः। अणुलक्षणा परमाणुलक्षणा पृथिवी नित्या। तदन्या परमाणुभिन्ना पृथिवी द्व्यणुकादिरूपा सर्व्वाऽप्यनित्येत्यर्थः। सैव अनित्या पृथिव्येव अवयववतीत्यर्थः। ननु अवयविनि किं मानं। परमाणुपुञ्जैरेवोपपत्तेः। न च परमाणूनामतीन्द्रियत्वाद् घटादेः प्रत्यक्षं न स्यादिति वाच्यं। एकस्य परमाणोरप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वात्। यथा एकस्य केशस्य दूरेऽप्रत्यक्षत्वे तत्समूहस्य प्रत्यक्षत्वं। न च एकः स्थूलो महान् घट इति बुद्धे-

सिद्धा० रनुपपत्तिरिति वाच्यं। एको महान् धान्यराशिरिति-वदुपपत्तेः। नैवं। परमाणोरतीन्द्रियत्वेन तत्समूहस्यापि प्रत्यक्षायोग्यत्वात्। दूरस्थकेशस्तु नातीन्द्रियः। सन्निधाने तस्यैव प्रत्यक्षत्वात्। न च तदानीं अदृश्यपरमाणुपुञ्जात् दृश्यपरमाणुपुञ्जस्योत्पन्नत्वात् न प्रत्यक्षत्वे विरोध इति वाच्यं। अदृश्यस्य दृश्यानुपादानत्वात्। अन्यथा चक्षुरादिसन्ततौ कदाचिद्दृश्यत्वप्रसङ्गात्। न चातितप्ततैलादौ कथमदृश्यदहनसन्ततेर्दृश्यदहनोत्पत्तिरिति वाच्यं। तत्र तदन्तःपातिभिर्दृश्यदहनावयवैः स्थूलदहनोत्पत्तेरुपगमात्। न चादृश्यद्व्यणुकेन कथं त्रसरेणोरुत्पत्तिरिति वाच्यं। यतो न वयं दृश्यत्वमदृश्यत्वं वा कस्यचित् स्वभावादाचक्ष्महे परन्तु महत्त्वोद्भूतरूपादिकारणसमुदायवशाद् दृश्यत्वं। तथाच त्रसरेणोर्महत्त्वात् प्रत्यक्षं न तु द्व्यणुकादेस्तदभावात्। न हि तन्मतेऽपीदं सम्भवति परमाणौ महत्त्वाभावात् इत्थं चावयविसिद्धौ तेषामुत्पादविनाशयोः प्रत्यक्षत्वादनित्यत्वं तेषां चावयवावयवधाराया अनन्तत्वे मेरुसर्षपयोरपि साम्यप्रसङ्गः। अतः क्वचिद्विश्रामो वाच्यः। यत्र च विश्रामस्तस्यानित्यत्वे त्वसमवेतभावकार्य्योत्पत्तिप्रसङ्गः स्यात्। अतस्तस्य नित्यत्वं मह-

भाषा० सा च त्रिधा भवेद्देह इन्द्रियं विषयस्तथा ॥ ३६ ॥
योनिजादिर्भवेद्देह इन्द्रियं घ्राणलक्षणं।

---

सिद्धा० त्परिमाणतारतम्यस्य गगनादौ विश्रान्तत्वमिवाणुपरिमाणतारतम्यस्यापि क्वचिद्विश्रान्तत्वमस्तीति तस्य परमाणुत्वसिद्धिः। न च त्रसरेणावेव विश्रामोऽस्त्विति वाच्यं। त्रसरेणुः सावयवश्चाक्षुषद्रव्यत्वाद् घटवदित्यनुमानेन तदवयवसिद्धौ त्रसरेणोरवयवाः सावयवा महदवयवत्वात् कपालवदित्यनुमानेन तदवयवसिद्धिः। न चेदमप्रयोजकं। अपकृष्टमहत्त्वं प्रति अनेकद्रव्यवत्त्वस्य प्रयोजकत्वात्। न चैवं क्रमेण तदवयवधारापि सिध्येदिति वाच्यं। अनवस्थाभयेन तदसिद्धेः। सा च त्रिधेति। सा कार्य्यरूपा पृथिवी त्रिविधा शरीरेन्द्रियविषयभेदादित्यर्थः ॥ ३६ ॥

तत्र देहमुदाहरति। योनिजादीति। योनिजमयोनिजञ्चेत्यर्थः। योनिजमपि जरायुजमण्डजञ्च। जरायुजं मानुषादीनां। अण्डजं सर्पादीनां। अयोनिजं स्वेदजोद्भिदादिकं। स्वेदजाः कृमिदंशाद्याः। उद्भिदस्तरुगुल्माद्याः। नारकिणां शरीरमपि अयोनिजं। न च मानुषादिशरीराणां पार्थिवत्वे किं मानमिति वाच्यं। गन्धादिमत्त्वस्यैव प्रमाणत्वात्। न च क्लेदउष्मादेरुपलम्भादाप्यत्वादिकमपि स्यादिति वाच्यं। तथा सति जलत्वपृथिवी-

भाषा॰ विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥ ३७ ॥

---

सिद्धा॰ त्वादिना सङ्करप्रसङ्गात्। न च तर्हि जलत्वादिकमेवास्तु
न तु पार्थिवत्वमिति वाच्यं। क्लेदादीनां विनाशेऽपि
शरीरत्वेन प्रत्यभिज्ञानात्। गन्धाद्युपलब्धेश्च पृथिवीत्व-
सिद्धेः। एतेन पार्थिवादिशरीरे जलादीनां निमित्त-
त्वमात्रं बोध्यं। शरीरत्वन्तु न जातिः पृथिवीत्वादिना
साङ्कर्यात् किन्तु चेष्टाश्रयत्वं। वृक्षादीनामपि चेष्टास-
त्त्वान्नाव्याप्तिः। न च वृक्षादीनां शरीरत्वे किं मानमिति
वाच्यं। आध्यात्मिकवायुसम्बन्धस्य प्रमाणत्वात्। तत्रैव
किं मानमिति चेत्। भग्नक्षतसंरोहणादिना तदनुमा-
नात्। यदि हस्तादौ शरीरव्यवहारो न भवति तदा-
न्त्यावयवित्वेन विशेषणीयं। न च यत्र शरीरे चेष्टा न
जाता तत्राव्याप्तिरिति वाच्यं। एतादृशे प्रमाणाभा-
वात्। अथवा चेष्टावदन्त्यावयविमात्रवृत्तिद्रव्यत्वव्याप्य
जातिमत्त्वं तत्* मानुषत्वचैत्रत्वजातिमादाय लक्षणसम-
न्वयः। न च नृसिंहशरीरे कथं लक्षणसमन्वयः। तत्र
सिंहत्वस्यैकव्यक्तिवृत्तितया जातित्वाभावात्। जली-
यतैजसशरीरवृत्तितया देवत्वस्यापि जातित्वाभावा-
दिति वाच्यं। कल्पभेदेन नृसिंहशरीरस्य नानात्वेन
नृसिंहत्वजात्या लक्षणसमन्वयात्। इन्द्रियमिति। घ्रा-

---

* अन्त्यावयविमात्रचेष्टावद्वृत्तिजातिमत्त्वं बोध्यं॥

भाषा० वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ ।

---

सिद्धा० णेन्द्रियं पार्थिवमित्यर्थः । पार्थिवत्वं कथमिति चेत् इत्थं घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात् कुङ्कुमगन्धादिव्यञ्जकघृतवत् । न च दृष्टान्ते स्वकीयरूपादिव्यञ्जकत्वादसिद्धिरिति वाच्यं । परकीयरूपाद्यव्यञ्जकत्वस्य तदर्थत्वात् । न च नवशरावगन्धव्यञ्जकजलेनानैकान्तमिति वाच्यं । तस्य शक्तुरसाभिव्यञ्जकत्वात् । यद्वा परकीयेति न देयं वायूपनीतसुरभिभागस्य दृष्टान्तत्वसम्भवात् । न च घ्राणेन्द्रियसन्निकर्षस्य गन्धमात्रव्यञ्जकत्वात्तत्र व्यभिचार इति वाच्यं । द्रव्यत्वे सति इति विशेषणात् ॥ विषय इति । उपभोगसाधनं विषयः । सर्व्वमेव हि कार्य्यजातं अदृष्टाधीनं । यत् कार्य्यं यददृष्टाधीनं तत्तदुपभोगं साक्षात् परम्परया वा जनयत्येव । न हि वीजप्रयोजनाभ्यां विना कस्यचिदुत्पत्तिरस्ति । तेन द्व्यणुकादिब्रह्माण्डं सर्व्वमेव विषयो भवति । शरीरेन्द्रिययोर्विषयत्वेऽपि प्रकारान्तरोपन्यासः शिष्यबुद्धिवैशद्यार्थः ॥ ३७ ॥

जलं निरूपयति । वर्णः शुक्ल इति । स्नेहसमवायिकारणतावच्छेदकतया जलत्वं जातिः सिध्यति । यद्यपि स्नेहत्वं नित्यानित्यवृत्तितया न कार्य्यतावच्छेदकं तथापि जन्यस्नेहत्वं तथा बोध्यं । अथ परमाणौ जलत्वं

भाषा० स्नेहस्तत्र द्रवत्वन्तु सांसिद्धिकमुदाहृतं ॥ ३८ ॥

---

सिद्धा० न स्यात्। तत्र जन्यस्नेहाभावात्। नित्यस्य स्वरूपयोग्यत्वे फलावश्यम्भावनियमादिति चेत्। न। जन्यस्नेहजनकतावच्छेदकतया जन्यजलत्वजातेः सिद्धौ तदवच्छिन्नजनकतावच्छेदकतया जलत्वजातिसिद्धेः ॥ शुक्लरूपवत्त्वमेव दर्शयितुमुक्तं। वर्णः शुक्ल इति। वस्तुस्थितिमात्रं न तु शुक्लरूपवत्त्वं लक्षणं। अथवा नैमित्तिकद्रवत्ववद्वृत्तिरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं अभास्वरशुक्लेतररूपासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थः ॥ रसस्पर्शाविति। जलस्य मधुर एव रसः। शीत एव स्पर्शः। तिक्तावृत्तिमधुरवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं ॥ ननु शुक्लरूपवत्त्वमेवेति कुतः कालिन्दीजलादौ नीलोपलब्धेरिति चेत्। न। नीलजनकतावच्छेदिकायाः पृथिवीत्वजातेरभावात् जले नीलरूपासम्भवात्। कालिन्दीजले नीलप्रतीतिः स्वाश्रयौपाधिकी। अत एव वियति विक्षेपे धवलिमोपलब्धेः। अथ जलमाधुर्य्ये किं मानं। न हि प्रत्यक्षेण कोऽपि रसस्तत्रानुभूयते। न च नारिकेलजलादौ माधुर्य्यमुपलभ्यत एवेति वाच्यं। तस्याश्रयौपाधिकत्वात्। अन्यथा जम्बीररसादावम्लाद्युपलब्धेरम्लादिमत्त्वमपि स्यादिति चेत्। न। हरीतक्यादिभक्षणस्य जलरसव्यञ्जकत्वात्।

भाषा० नित्यतादि प्रथमवत् किन्तु देहमयोनिजं।

---

सिद्धा० न च हरीतक्यामेव जलोष्णसंयोगाद्रसान्तरोत्पत्ति-रिति वाच्यं। कल्पनागौरवात्। पृथिवीत्वस्याम्लादिज-नकतावच्छेदकत्वाच्च। जले नाम्लादिकं जम्बीररसादौ तु आश्रयौपाधिकी तथा प्रतीतिः। एवं जन्यशीत-स्पर्शजनकतावच्छेदकं जलत्वं अन्यजलत्वं वा बोध्यं। घृष्टचन्दनादौ तु शैत्योपलब्धिश्चन्दनान्तर्वर्त्तिशीततर-सलिलस्य तेजःसंयोगाज्जले औष्ण्यप्रतीतिरौपाधिकी स्फुटैव। तत्र पाकासम्भवात्॥ स्नेहस्यचेति। घृतादा-वपि तदन्तर्वर्त्तिजलस्यैव स्नेहः। जलस्य स्नेहसमवा-यिकारणत्वात्। तेन जल एव स्नेह इति मन्तव्यं॥ द्रवत्वमिति। सांसिद्धिकद्रवत्वत्वं जातिविशेषः प्रत्यक्ष-सिद्धः। तदवच्छिन्नजनकतावच्छेदकमपि तदेवेति भावः। तैलादावपि जलस्य द्रवत्वं स्नेहप्रकर्षेण च दहनानुकू-ल्यमिति वक्ष्यति॥ ३८॥

प्रथमवदिति। पृथिव्या इवेत्यर्थः। तथाहि जलत्वं द्विविधं नित्यमनित्यञ्च। परमाणुरूपं नित्यं। द्व्यणु-कादिकं सर्व्वमनित्यं अवयवसमवेतञ्च। अनित्यमपि त्रिविधं शरीरेन्द्रियविषयभेदात्। किन्तु पृथिवीतो यो विशेषस्तमाह। किन्त्विति। अयोनिजमिति अयो-निजमेवेत्यर्थः। जलीयं शरीरमयोनिजं वरुणलोके

भाषा॰ इन्द्रियं रसनं सिन्धुहिमादिर्विषयो मतः ॥ ३९ ॥
स्पर्श उष्णस्तेजसस्तु स्याद्रूपं शुक्लभास्वरं ।

---

सिद्धा॰ प्रसिद्धमिति । इन्द्रियं रसनं जलीयमित्यर्थः । तथाहि रसनं जलीयं गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात् । शक्तुरसाभिव्यञ्जकोदकवत् रसनसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देयं ॥ विषयं दर्शयति । सिन्धुहिमादिरिति । सिन्धुः समुद्रः । हिमं तुषारः । आदिपदात् सरित्कासारकरकादिः सर्व्वो ग्राह्यः । न च हिमकरकयोः कठिनत्वात् पार्थिवत्वमिति वाच्यं । उष्मणा विलीनस्य तस्य जलत्वस्य प्रत्यक्षसिद्धत्वात् । यद्द्रव्यं यद्द्रव्यध्वंसजन्यमिति व्याप्तेर्जलोपादानेनोपादेयत्वसिद्धेः । अदृष्टविशेषेणैवाद्रवत्वविरोधात् करकादीनां काठिन्यप्रत्ययस्य भ्रान्तत्वात् ॥ ३९ ॥

तेजो निरूपयति । स्पर्श उष्ण इत्यादिना । उष्णत्वं स्पर्शनिष्ठो जातिविशेषः प्रत्यक्षसिद्धं । इत्थञ्च जन्योष्णस्पर्शसमवायिकारणतावच्छेदकं तेजस्त्वं जातिविशेषः । तस्य परमाणुवृत्तित्वं तु जलत्वस्येवानुसन्धेयं । न चोष्णस्पर्शवत्त्वं चन्द्रकिरणादावव्याप्तमिति वाच्यं । तत्रापि श्रौष्ण्यस्य सत्त्वात् । किन्तु तदन्तःपातिजलस्पर्शेनाभिभवादग्रहः । एवं रत्नकिरणादौ पार्थिवस्पर्शेनाभिभवाच्चक्षुरादौ चानुद्भूतत्वादग्रहः ॥ रूपमित्यादि ।

भाषा० नैमित्तिकं द्रवत्वन्तु नित्यतादि च पूर्व्ववत् ॥ ४० ॥
इन्द्रियं नयनं वह्निस्वर्णादिर्विषयो मतः ।

---

सिद्धा० वैश्वानरे मरकतकिरणादौ च पार्थिवरूपेणाभिभवात् शुक्लत्वाग्रहः ॥ ननु तद्रूपाग्रहे धर्म्मिणोऽपि चाक्षुषत्वं न स्यादिति चेत् । न । अन्यदीयरूपेणापि धर्म्मिणो ग्रहसम्भवात् शङ्खस्येव पित्तपीतिम्ना । वह्नेस्तु शुक्लं नाभिभूतं किन्तु तदीयं शुक्लत्वमभिभूतमित्यन्ये । नैमित्तिकमिति । सुवर्णादिरूपे तेजसि तत्सत्वात् । न च नैमित्तिकद्रवत्ववत्त्वं न लक्षणं दहनादावव्याप्तेर्घृतादावतिव्याप्तेश्चेति वाच्यं । पृथिव्यवृत्तिनैमित्तिकद्रवत्ववद्वृत्तिजातिमत्त्वस्य विवक्षितत्वात् ॥ पूर्व्ववदिति । जलस्येवेत्यर्थः । तथा हि तद्द्विविधं नित्यमनित्यञ्च । नित्यं परमाणुरूपं । तदन्यदनित्यं अवयवि । तच्च त्रिधा शरीरेन्द्रियविषयभेदात् । शरीरमयोनिजमेवेत्यर्थः । तच्च सूर्य्यलोकादौ प्रसिद्धं ॥ ४० ॥

अत्र यो विशेषस्तमाह इन्द्रियमिति । चक्षुस्तैजसं परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपवत् । प्रदीपस्य स्वीयस्पर्शव्यञ्जकत्वादाद्यं परकीयेति । घटादेः स्वीयरूपव्यञ्जकत्वात् व्यभिचारावारणाय द्वितीयं परकीयेति । अथवा प्रभाया दृष्टान्तत्वसम्भवात् परकीयद्वयं न देयं । चक्षुःसन्निकर्षे व्यभि-

भाषा० अपाकजोऽनुष्णाशीतः स्पर्शस्तु पवने मतः ॥ ४१ ॥

---

सिद्धा० चारवारणाय द्रव्यत्वं देयं ॥ विषयं दर्शयति। वह्नीति। ननु सुवर्णस्य तैजसत्वे किं मानमिति चेत् । न । सुवर्णं तैजसं असति प्रतिबन्धके अत्यन्तानलसंयोगे ऽप्यनुच्छिद्यमानद्रवत्वात् यन्नैवं तन्नैवं यथा पृथिवी। न चाप्रयोजकं पृथिवीद्रवत्वस्य जन्यजलद्रवत्वस्य चाग्निसंयोगनाश्यत्वात् ॥ ननु पीतिमगुरुत्वाश्रयस्य पार्थिवस्यापि तदानीं द्रुतत्वात्तेन व्यभिचार इति चेत्। न। जलमध्यस्थमषीचोदवत् तस्याद्रवत्वात् । अपरे तु पीतिमगुरुत्वाश्रयस्य अत्यन्ताग्निसंयोगेऽपि रूपापरावृत्तिदर्शनात् तत्प्रतिबन्धकविजातीयं द्रवद्रव्यं कल्प्यते । तथाहि अग्निसंयोगे पीतिमगुरुत्वाश्रयः विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः । अत्यन्ताग्निसंयोगेऽपि पूर्व्वरूपविजातीयरूपानधिकरणपार्थिवत्वात् जलमध्यस्थपीतपटवत् तस्य च पृथिवीजलभिन्नस्य तेजस्त्वनियमात् ॥ वायुं निरूपयति । अपाकज इति । अनुष्णाशीतस्पर्शस्य पृथिव्यामपि सत्त्वादुक्तं अपाकज इति । अपाकजस्पर्शस्य जलादावपि सत्त्वादुक्तं अनुष्णाशीत इति। तेन वायवीयो विजातीयस्पर्शो दर्शितः। तज्जनकतावच्छेदकं वायुत्वमिति भावः ॥ ४१ ॥

भाषा० तिर्य्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः ।
पूर्व्ववन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियं ॥ ४२ ॥
प्राणादिस्तु महावायुपर्य्यन्तो विषयो मतः ।

---

सिद्धा० एष वायुः स्पर्शादिलिङ्गकः । वायुर्हि स्पर्शशब्दधृतिकम्पैरनुमीयते । विजातीयस्पर्शेन विलक्षणशब्देन तृणादीनां धृत्या शाखादीनां कम्पेन च वायोरनुमानात् । यथा च वायोर्न प्रत्यक्षं तथाग्रे वक्ष्यते ॥ पूर्व्ववदिति ॥ वायुर्द्विविधो नित्योऽनित्यश्च । परमाणुरूपो नित्यस्तदन्योऽनित्यः समवेतश्च । सोऽपि त्रिविधः शरीरेन्द्रियविषयभेदात् । तत्र शरीरमयोनिजं पिशाचादीनां । परन्तु जलीयतैजसवायवीयशरीराणां पार्थिवभागोपष्टम्भादुपभोगसाधनत्वं जलादीनां प्राधान्याज्जलीयत्वमिति ॥ अत्र यो विशेषस्तमाह । देहव्यापीति । शरीरव्यापकं स्पर्शग्राहकमिन्द्रियं त्वक् तच्च वायवीयं । रूपादिषु मध्ये स्पर्शस्यैव व्यञ्जकत्वात् ॥ ४२ ॥

अङ्गसङ्गिसलिलशैत्यव्यञ्जकव्यजनवातवद् विषयं दर्शयति । प्राणादिरिति । यद्यपि अनित्यो वायुश्चतुर्व्विधः तस्य चतुर्थी विधा प्राणादिरित्युक्तमाकरे तथापि सङ्क्षेपादत्र त्रैविध्यमुक्तं । प्राणस्त्वेक एव हृदादिनानास्थानवशान्मुखनिर्गमादिनानाक्रियावशाच्च नानासञ्ज्ञा लभत इति ॥

भाषा० आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥ ४३ ॥
इन्द्रियन्तु भवेत् श्रोत्रमेकः सन्नप्युपाधितः ।

---

सिद्धा० आकाशं निरूपयति । आकाशस्येति । आकाशकालदिशामेकैकव्यक्तित्वाद् आकाशत्वादिकं न जातिः किन्तु आकाशत्वं शब्दाश्रयत्वं । वैशेषिक इतिकथनन्तु विशेषगुणान्तरव्यवच्छेदाय । एतेन प्रमाणमपि दर्शितं । तथा हि । शब्दो गुणश्चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात् स्पर्शवत् । शब्दो द्रव्यसमवेतो गुणत्वात् संयोगवद् इत्यनुमाने शब्दस्य द्रव्यसमवेतत्वे सिद्धे शब्दो न स्पर्शवद्विशेषगुणः । अग्निसंयोगासमवायिकारणकत्वाभावे सति अकारणगुणपूर्व्वकप्रत्यक्षत्वात् सुखवत् । पाकजरूपादौ व्यभिचारवारणाय सत्यन्तं पटरूपादौ व्यभिचारवारणायकारणगुणपूर्व्वकेति । जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति । शब्दो न दिक्कालमनसां गुणो विशेषगुणत्वात् । नात्मविशेषगुणः । बहिरिन्द्रियग्राह्यत्वाद् रूपवत् । इत्यञ्च शब्दाधिकरणं नवमद्रव्यं गगणनामकं सिध्यतीति । न च वाय्ववयवेषु सूक्ष्मशब्दक्रमेण वायौ कारणगुणपूर्व्वकः शब्द उत्पाद्यतामिति वाच्यं । अयावद्द्रव्यभावित्वेन वायुविशेषगुणत्वाभावात् । तत्र शरीरस्य विषयस्य चाभावात् ॥ ४३ ॥

इन्द्रियं दर्शयति । इन्द्रियमिति ॥ गन्त्वाकाशं लाघवा-

भाषा० जन्यानां जनकः कालो जगतमाश्रयो मतः ॥ ४४ ॥
परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः ।

---

सिद्धा० देकं सिद्धं श्रोत्रं पुरुषभेदेन भिन्नं कथमाकाशं स्यादत आह । एकः सन्नपीत्यादि । आकाश एक एव सन्नपि उपाधेः कर्णशष्कुल्यादेर्भेदाद्भिन्नं श्रोत्रात्मकं भवतीत्यर्थः ॥

कालं निरूपयति । जन्यानामिति ॥ तत्र प्रमाणं दर्शयितुमाह । जगतामिति । तथाहि इदानीं घट इत्यादिप्रतीतिः सूर्य्यपरिस्पन्दादिकं यदि विषयीकरोति तदा सूर्य्यपरिस्पन्दादिना घटादेः सम्बन्धो वाच्यः स च संयोगादिर्न संभवतीति काल एव तत्सम्बन्धघटकः कल्प्यते ॥ ४४ ॥

इत्यञ्च तस्याश्रयत्वमपि सम्यक् प्रमाणान्तरं दर्शयति । परापरत्वेति । परत्वापरत्वबुद्धेरसाधारणं निमित्तं काल एव । परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयो लाघवादतिरिक्तः कल्प्यत इति भावः ॥ नन्वेकस्य कालस्य सिद्धौ क्षणदिनमासवर्षादिसमयभेदो न स्यादत आह । क्षणादिरिति । कालस्त्वेकोऽपि उपाधिभेदात् क्षणादिव्यवहारविषयः । उपाधिस्तु स्वजन्यविभागप्रागभावावच्छिन्नं कर्म्म पूर्व्वसंयोगानवच्छिन्नविभागो वा पूर्व्वसंयोगनाशावच्छिन्न उत्तरसंयोगप्रागभावो वा उत्तरसंयोगावच्छिन्नं कर्म्म वा । न चोत्तर-

भाषा० दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ॥ ४५ ॥
उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक् ।

---

सिद्धा० संयोगानन्तरं क्षणव्यवहारो न स्यादिति वाच्यं । कर्म्मान्तरसत्त्वादिति । महाप्रलये क्षणादिव्यवहारो यद्यपि तदनायत्या ध्वंसेनोपपादनीयः । दिनादिव्यवहारस्तु तत्तत्क्षणकूटैरेवेति ॥

दिशं निरूपयति । दूरान्तिकेति । दूरत्वं अन्तिकत्वञ्च दैशिकं परत्वमपरत्वं बोध्यं । तद्बुद्धेरसाधारणं बीजं दिगेव । दैशिकपरत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतया दिक् सिध्यतीति भावः ॥ ४५ ॥

नन्वेकैव दिग् यदि तदा प्राचीप्रतीच्यादिव्यवहारः कथमुपपद्यतामित्यत आह । उपाधीति । यत्पुरुषस्य उदयगिरिसन्निहिता या दिक् सा तस्य प्राची उदयगिरिव्यवहिता च प्रतीची । एवं तत्पुरुषीयसुमेरुसन्निहिता दिगुदीची तद्व्यवहिता त्ववाची। सर्व्वेषामेव वर्षाणां मेरुरुत्तरतः स्थित इति नियमात् ॥

आत्मानं निरूपयति । आत्मेन्द्रियेति । आत्मत्वजातिस्तु सुखदुःखादिसमवायिकारणतावच्छेदकतया सिध्यति । ईश्वरेऽपि सा जातिरस्त्येव । अदृष्टादिरूपकारणाभावाच्च न सुखदुःखाद्युत्पत्तिः । नित्यस्य स्वरूपयोग्यस्य फलावश्यभाव इति नियमस्याप्रयोजकत्वात् ॥ परे त्वीश्वरे सा जातिर्नास्त्येव प्रमाणाभावात् । न च

भाषा॰ आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकं ॥ ४६ ॥
शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः ।

---

सिद्धा॰ इत्यसद्द्रव्यत्वापत्तिर्ज्ञानवत्त्वेन विभजनादिति वदन्ति ॥ इन्द्रियादीति । इन्द्रियाणां शरीरस्य च परम्परया चैतन्यसम्पादकः ॥ यद्यप्यात्मनि अहं जाने अहं सुखीत्यादिप्रत्यक्षविषयत्वमस्त्येव तथापि विप्रतिपन्नं प्रति प्रथमत एव शरीरादिभिन्नस्तत्प्रतीतिगोचर इति प्रतिपादयितुं न शक्यत इत्यतः प्रमाणं दर्शयति । करणमिति । कुठारादीनां छिदादिकरणानां कर्त्तारमन्तरेण फलानुपधानं दृष्टं । एवं चक्षुरादीनां ज्ञानकरणानां फलोपधानमपि कर्त्तारमन्तरेण नोपपद्यत इत्यतिरिक्तः कर्त्ता कल्प्यते ॥ ४६ ॥

ननु शरीरस्यैव कर्त्तृत्वमस्तु अत आह । शरीरस्येति ॥ ननु चैतन्यं ज्ञानादिकमेव । मुक्तात्मनां त्वन्मत इव मृतशरीराणामपि तदभावे का क्षतिः प्राणाभावेन ज्ञानाभावस्य सिद्धेरिति चेत् । न । शरीरस्य चैतन्ये बाल्ये विलोकितस्य स्थाविरे स्मरणानुपपत्तेः । शरीराणामवयवोपचयापचयैरुत्पादविनाशशालित्वात् ॥ न च पूर्व्वशरीरोत्पन्नसंस्कारेण द्वितीयशरीरे संस्कार उपपद्यत इति वाच्यं । अनन्तसंस्कारकल्पने गौरवात् । एवं शरीरस्य चैतन्ये बालकस्य

भाषा॰ तथात्वञ्चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥ ४७ ॥
मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत् ।

---

सिद्धा॰ स्तनपानादौ प्रवृत्तिर्न स्यात् । इष्टसाधनताज्ञानस्य तद्धेतुत्वात् । तदानीमिष्टसाधनतास्मारकाभावात् । मन्माते जन्मान्तरानुभूतेष्टसाधनत्वस्य तदानीं स्मरणादेव प्रवृत्तिः ॥ न च जन्मान्तरानुभूतमन्यदपि स्मर्यतामिति वाच्यं । उद्बोधकाभावात् । अत्र त्वनायत्या जीवनादृष्टमेवोद्बोधकं कल्प्यते । इत्यञ्च संसारस्यानादितया आत्मनोऽपि अनादित्वसिद्धौ अनादिभावस्य नाशासम्भवात् नित्यत्वं सिध्यतीति बोध्यं ॥ ननु चक्षुरादीनां ज्ञानादौ करणत्वं कर्तृत्वन्त्वास्तु विरोधे बाधकाभावादत आह । तथात्वमिति । चैतन्यमित्यर्थः । उपघाते नाशे सति अर्थाच्चक्षुरादीनामेव । कथमिति । पूर्व्वं चक्षुषा साक्षात् कृतानां चक्षुषोऽभावे स्मरणं न स्यात् । अनुभवितुरभावात् । अन्यदृष्टस्य अन्येन स्मरणासम्भवात् । अनुभवस्मरणयोः सामानाधिकरण्येन कार्य्यकारणभावादिति भावः ॥ ४७ ॥

ननु चक्षुरादीनां चैतन्यं माऽस्तु मनसस्तु नित्यस्य चैतन्यं स्यादत आह । मनो ऽपीति ॥ न तथा । न चेतनं । ज्ञानादीति । मनसोऽणुत्वात् । प्रत्यक्षे च महत्त्वस्य हेतुत्वात् । मनसि ज्ञानसुखादिमत्त्वे तत्-

भाषा॰ धर्म्माधर्म्माश्रयोऽध्यक्षो विशेषगुणयोगतः ॥ ४८ ॥

---

सिद्धा॰ प्रत्यक्षानुपपत्तेरित्यर्थः । यथा मनसोऽणुत्वं तथा व-
क्ष्यते ॥ नन्वस्तु विज्ञानमेव आत्मा तस्य स्वतः प्रका-
शरूपत्वात् चेतनत्वं ज्ञानसुखादिकन्तु तस्यैवाकारवि-
शेषः । तस्यापि भावत्वादेव क्षणिकत्वं पूर्व्वपूर्व्वविज्ञा-
नस्योत्तरविज्ञाने हेतुत्वात् । सुषुप्तावपि आलयविज्ञा-
नधारा निराबाधैव मृगमदवासनाया वसन इव पूर्व्व-
पूर्व्वविज्ञानजनितसंस्काराणामुत्तरोत्तरविज्ञाने सङ्क्रा-
न्तत्वान्नानुपपत्तिः स्मरणादेरिति चेत् । न । तस्य जग-
द्विषयत्वे सार्व्वज्ञापत्तेः । यत्किञ्चिद्विषयत्वे विनिगमना-
भावः ॥ सुषुप्तावपि विषयावभासप्रसङ्गः । तदानीं
निराकारा चित्सन्ततिरनुवर्त्तत इति चेत् । न । तस्य
स्वप्रकाशत्वे प्रमाणाभावात् । अन्यथा घटादीनामपि
ज्ञानत्वापत्तिः ॥ न चेष्टापत्तिर्विज्ञानव्यतिरिक्तवस्तुनो
ऽभावादिति वाच्यं । घटादेरनुभूयमानस्यापलपितु-
मशक्यत्वात् ॥ आकारविशेष एवायं विज्ञानस्येति चेत् ।
किमयमाकारोऽतिरिच्यते विज्ञानात् । तर्हि समायातं
विज्ञानव्यतिरिक्तेन । नातिरिच्यते चेत् तर्हि समूहाल-
म्बने नीलाकारोऽपि पीताकारः स्यात् । स्वरूपतो वि-
ज्ञानस्याविशेषात् ॥ अपोहरूपो नीलत्वादिर्व्विज्ञानधर्म्म
इति चेत् । न । नीलत्वादीनां विरुद्धानामेकस्मिन्नसमा-

सिद्धा॰ वेशात्। इतरथा विरोधस्यैव दुरुपपन्नत्वात्॥ न च वास-नासङ्क्रमः सम्भवति। मातृपुत्रयोरपि वासनासङ्क्रमप्रस-ङ्गात्॥ न च उपादानोपादेयभावो नियामक इति वाच्यं। वासनायाः सङ्क्रमासम्भवात्॥ उत्तरस्मिन्नुत्पत्तिरेव स-ङ्क्रम इति चेत्। न। तदुत्पादकाभावात्। उत्तरविज्ञा-नस्यैवोत्पादकत्वे तदानन्त्यप्रसङ्गः॥ चणिकविज्ञानेऽति-शयविशेषः कल्प्यत इति चेत्। न। मानाभावात्। कल्प-नागौरवाच्च। एतेन चणिकशरीरस्यैव चैतन्यमपि प्र-त्युक्तं। गौरवादतिशये मानाभावाच्च। वीजादावपि सह-कारिसमवधानादेवोपपत्तेः। कुर्व्वद्रूपत्वाकल्पनाच्च॥ अस्तु तर्हि चणिकविज्ञाने गौरवान्नित्यविज्ञानमेवात्मा-विनाशी वा। अरे अयमात्मा सत्यं ज्ञानमनन्तं ब्रह्मेत्या-दिश्रुतेरिति चेत्। न। तस्य सविषयत्वासम्भवस्य दर्शि-तत्वात्। निर्व्विषयस्य ज्ञानत्वे मानाभावात्। सविषयत्व-स्याप्यनुभवात्। अतो ज्ञानभिन्नो नित्य आत्मेति सिद्धं॥ सत्यं ज्ञानमिति ब्रह्मपरं जीवेषु नोपयुज्यते ज्ञानाज्ञा-नसुखित्वदुःखित्वादिभिर्जीवानां भेदसिद्धौ सुतरामी-श्वराभेदः। अन्यथा बन्धमोचानुपपत्तेः। योऽपीश्वरभे-दबोधको वेदः सोऽपि तदभेदेन तदीयत्वं प्रतिपाद-यन् स्तौति। अभेदभावने च यतितव्यमिति वदति। अत एव सर्व्व एव आत्मनि समर्पिताः श्रूयन्ते। मोच-दशायामज्ञाननिवृत्तौ अभेदो जायत इत्यपि न।

सिद्धा॰ भेदस्य नित्यत्वेन नाशायोगात्। भेदनाशेऽपि व्यक्तिद्वयं स्यास्त्येव॥ न च द्वित्वमपि नश्यतीति वाच्यं। तत्र निर्धर्मके ब्रह्मणि सत्यत्वाभावेऽपि सत्यस्वरूपं तदितिवद् द्वित्वाभावेऽपि द्वयात्मकौ ताविति। सुत्रचत्वात् मिथ्यात्वाभावोऽधिकरणात्मकः॥ तत्र सत्यत्वमिति चेद् एकत्वाभावो व्यक्तिद्वयात्मको द्वित्वमप्युच्यतां प्रत्येकमेकत्वेऽपि पृथिवीजलयोर्न गन्ध इतिवदुभयं नैकमित्यस्य सर्व्वजनसिद्धत्वात्। योऽपि तदानीमभेदप्रतिपादक आगमः सोऽपि निर्दुःखत्वादिना साम्यं प्रतिपादयति। सम्पदाधिको पुरोहितोऽयं राजा संवृत्त इतिवत्। अत एव निरञ्जनः परमं साम्यमुपैतीति श्रूयते॥ ईश्वरो न ज्ञानसुखात्मा किन्तु ज्ञानाद्याश्रयः। नित्यं विज्ञानमानन्दं ब्रह्म इत्यादौ विज्ञानपदेन ज्ञानाश्रय एवोक्तः। यः सर्व्वज्ञ इत्यनुरोधात्। आनन्द इत्यस्यापि आनन्दवदित्यर्थः। अर्श्आदित्वान्मत्वर्थीयाच्प्रत्ययात्। अन्यथा पुंलिङ्गत्वापत्तेः। आनन्दोऽपि दुःखाभावे उपचर्य्यते। भाराद्यपगमे सुखी संवृत्तोऽहमितिवद् दुःखाभावेन सुखित्वप्रत्ययात्। अस्तु वा तस्मिन्नानन्दो न त्वसावानन्दमित्यत्र मत्वर्थीयप्रत्ययविरोधात्। आनन्दं ब्रह्मणो विद्वान् बिभेति कदाचनेत्यत्र भेदस्य स्पष्टत्वाच्चेति सङ्क्षेपः॥

एतेन प्रकृतिः कर्त्री पुरुषः पुष्करपलाशवन्नि-

विज्ञा॰ लेपः किन्तु चेतनः । कार्य्यकारणयोरभेदात् कार्य्य-
नाशे कार्य्यरूपतया नाशः स्यादित्यकारणत्वं तस्य ।
बुद्धिगतचैतन्याभिमानान्यथाऽनुपपत्त्या तत्कल्पनं । बु-
द्धिश्च प्रकृतेः प्रथमः परिणामः । सैव महत्तत्त्वमन्तः-
करणमप्युच्यते । तत्सत्त्वासत्त्वाभ्यां पुरुषस्य संसा-
रापवर्गौ । तस्या एवेन्द्रियप्रणालिकया परिणतिर्ज्ञा-
नरूपा । घटादिना सम्बन्धः पुरुषे कर्त्तृत्वाभिमानो
बुद्धौ चैतन्याभिमानश्च । भेदाग्रहात् । ममेदं कर्त्त-
व्यमिति मदंशः पुरुषोपरागो बुद्धेः स्वच्छतया चेत-
नप्रतिबिम्बादतात्त्विको दर्पणस्येव मुखोपरागः । इद-
मिति विषयोपराग इन्द्रियप्रणालिकया परिणतिभे-
दस्तात्त्विको निश्वासाभिहतदर्पणस्येव मलिनिमा ।
कर्त्तव्यमिति व्यापारावेशः।तेनांशत्रयवती बुद्धिः।तत्-
परिणामेन ज्ञानेन पुरुषस्यातात्त्विकः सम्बन्धो दर्पण-
मलिन्येव मुखस्योपलब्धिरुच्यते। ज्ञानादिवत् सुखदुः-
खेच्छाद्वेषप्रयत्नधर्माधर्मा अपि बुद्धेरेव। कृतिसामा-
नाधिकरण्येन प्रतीतेः । न च बुद्धिश्चेतना परिणामि-
त्वादिति साङ्ख्यमतमपास्तं ॥

कृत्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिक-
रण्यप्रतीतेस्तद्भिन्ने मानाभावात्। चेतनोऽहं करोमीति
प्रतीतेर्बुद्धिपरिणामित्वात्॥ चैतन्यांशे भ्रम इति चेत् कृ-
त्यंशे किं नेष्यते। अन्यथा बुद्धेर्नित्यत्वे मोक्षाभावोऽनि-

भाषा० प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः ।

---

सिद्धा० त्वत्वे तत्पूर्व्वमसंसारापत्तिः ॥ अचेतनायाः प्रकृतेः कार्य्यत्वात् बुद्धेरचैतन्यं कार्य्यकारणयोस्तादात्म्यादिति चेत् । न । असिद्धेः । कर्त्तुर्जन्यत्वे मानाभावात् । वीतरागजन्मादर्शनादनादित्वं । अनादेर्नाशासम्भवान्नित्यत्वं । तत् किं प्रकृत्यादिकल्पनेन ॥ न च

प्रकृतेः क्रियमाणानि गुणैःकर्म्माणि सर्व्वशः ।
अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ॥

इत्यनेन विरोध इति वाच्यं । प्रकृतेरदृष्टस्य । गुणैरदृष्टजन्यैर्गुणैः इच्छादिभिः । कर्त्ताहं कर्त्ताहमेव । इत्यस्य तदर्थत्वात् ॥

तत्रैवं सति कर्त्तारमात्मानं केवलन्तु यः ।

इत्यादि वदता भगवता प्रकटीकृतोऽयमुपरिष्टादाशय इति सङ्क्षेपः ॥

धर्म्माधर्म्माश्रय इति । आत्मेत्यनुषज्यते । शरीरस्य तदाश्रयत्वे देहान्तरकृतकर्म्मणां देहान्तरेण भोगानुपपत्तेः ॥ विशेषगुणयोगत इति । योग्यविशेषगुणसम्बन्धेनात्मनः प्रत्यक्षं भवति न त्वन्यथा । अहं जाने अहङ्करोमि इत्यादिप्रतीतेः ॥ ४८ ॥

प्रवृत्तीति । अयमात्मा परदेहादौ प्रवृत्त्यादिनाऽनुमीयते । प्रवृत्तिरत्र चेष्टा । ज्ञानेच्छाप्रयत्नादीनां

भाषा० अहङ्कारस्याश्रयोऽयं मनोमात्रस्य गोचरः ॥ ४९ ॥
विभुर्बुद्ध्यादिगुणवान् बुद्धिस्तु द्विविधा मता ।
अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्व्विधा ॥ ५० ॥
प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे ।

---

सिद्धा० देहे अभावस्योक्तप्रायत्वात् । चेष्टायाश्च यत्नसाध्यत्वात् । चेष्टया प्रयत्नवानात्माप्यनुमीयत इति भावः ॥ तत्र दृष्टान्तमाह । रथेति । यद्यपि रथकर्म्म चेष्टा न भवति तथापि तेन कर्म्मणा सारथिर्यथाऽनुमीयते तथा चेष्टात्मकेन कर्म्मणा परात्मापीति भावः ॥ अहङ्कारस्येति । अहङ्कारोऽहमिति प्रत्ययः तस्याश्रयो विषय आत्मनि शरीरादिरिति ॥ मन इति । मनोभिन्नेन्द्रियजन्यप्रत्यक्षाविषयो मानसप्रत्यक्षविषयस्येत्यर्थः । रूपाद्यभावेनेन्द्रियान्तरायोग्यत्वात् ॥ ४९ ॥

विभुरिति । विभुत्वं परममहत्त्वं तच्च पूर्व्वोक्तमपि स्पष्टार्थमुक्तं । बुद्ध्यादीति । बुद्धिसुखदुःखेच्छादिचतुर्द्दशगुणाः पूर्व्वोक्ता वेदितव्या । अत्रैव प्रसङ्गाद्बुद्धेः कतिपयप्रपञ्चं दर्शयति । बुद्धिस्त्विति ॥ द्वैविध्यं व्युत्पादयति । अनुभूतिरिति । अनुभूतिश्चतुर्विधेति । एतासाञ्चतसृणां करणानि प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति सूत्रोक्तानि वेदितव्यानि ॥ ५० ॥

प्रत्यक्षमिति । इन्द्रियजन्यं ज्ञानं प्रत्यक्षं । यद्यपि

भाषा० घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतं ॥ ५१ ॥

---

सिद्धा० मनोरूपेन्द्रियजन्यं सर्व्वमेव ज्ञानं तथापि इन्द्रियत्वेन रूपेण इन्द्रियाणां यत्र ज्ञाने कारणत्वं तत्प्रत्यक्षमिति विवक्षितं । ईश्वरप्रत्यक्षन्तु न लक्ष्यं इन्द्रियार्थं सन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति सूत्रे तथैवोक्तत्वात् । अथ वा ज्ञानाकरणकं ज्ञानं प्रत्यक्षं । इदं लक्षणं ईश्वरप्रत्यक्षसाधारणं इत्यनुमितौ व्याप्तिज्ञानस्य उपमितौ सादृश्यज्ञानस्य शाब्दबोधे पदज्ञानस्य स्मरणेऽनुभवस्य च हेतुत्वात्र तत्र तत्रातिव्याप्तिः ॥ परामर्शजन्यं ज्ञानमनुमितिः । यद्यपि परामर्शप्रत्यक्षादिकं परामर्शजन्यं तथापि परामर्शजन्यं हेत्वविषयकं यज्ज्ञानं तदेवानुमितिः॥ न च कादाचित्कहेतुविषयकानुमितावव्याप्तिरिति वाच्यं । तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । अथ वा व्याप्तिज्ञानकरणकं ज्ञानमनुमितिः । एवं सादृश्यज्ञानकरणकं ज्ञानमुपमितिः ।पदज्ञानकरणकं ज्ञानं शाब्दबोधः । वस्तुतो यत्किञ्चिदनुमितिव्यक्तिमादाय तद्व्यक्तिवृत्तित्वे सति यत्किञ्चित्प्रत्यक्षव्यक्तिमादाय तदवृत्तिजातिमत्त्वं अनुमितित्वं । एवं यत्किञ्चित्प्रत्यक्षादिमादाय तद्व्यक्तिवृत्तित्वे सति यत्किञ्चिदनुमितिव्यक्तिमादाय तदवृत्तिजातिमत्त्वं प्रत्यक्षत्वादिकं वाच्यमिति॥

भाषा० घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः ।
तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः ॥ ५२ ॥
उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये।
विभागसंयोगपरापरत्वस्नेहद्रवत्वपरिमाणयुक्तं॥५३॥
क्रियां जातिं योग्यवृत्तिं समवायञ्च तादृशं ।

---

सिद्धा० घ्राणजादीति । घ्राणजं रासनं चाक्षुषं स्पार्शनं श्रौत्रं मानसमिति षड्विधं प्रत्यक्षं । न चेश्वरप्रत्यक्षस्याविभजनान्न्यूनत्वं । जन्यप्रत्यक्षस्यैव निरूपणीयत्वात् उक्तसूत्रानुसारात् ॥ ५१ ॥

घ्राणस्येति । गोचर इति ग्राह्य इत्यर्थः । गन्धत्वादिरिति । आदिपदात् सुरभित्वासुरभित्वपरिग्रहः । गन्धस्य प्रत्यक्षत्वात्तद्वृत्तिजातिरपि प्रत्यक्षा । गन्धाश्रयग्रहणे तु घ्राणस्य न सामर्थ्यमिति बोध्यं ॥ तथा रस इति। रसत्वादिसहित इत्यर्थः । गन्धो रसश्च उद्भूतो बोध्यः । तथा शब्दत्वादिसहितः ॥ ५२ ॥

उद्भूतरूपमिति । ग्रीष्मोष्मादावनुद्भूतरूपमिति न चाक्षुषं प्रत्यक्षं । तद्वन्ति उद्भूतरूपवन्ति ॥ ५२ ॥

योग्येति । पृथक्त्वादिकमपि योग्यवृत्तितया ग्राह्यं । तादृशं योग्यवृत्तिमित्यर्थः ॥ चक्षुर्योग्यत्वमेव कथं तदाह । गृह्णातीति । आलोकसंयोग उद्भूतरूपञ्च चाक्षुषप्रत्यक्षं प्रति कारणं । तत्र द्रव्यचाक्षुषं प्रति तयोः

भाषा० गृह्णाति चक्षुः संयोगादालोकोद्भूतरूपयोः ॥ ५४ ॥
उद्भूतस्पर्शवद् द्रव्यं गोचरः सोऽपि च त्वचः ।

---

सिद्धा० समवायसम्बन्धेन कारणत्वं । द्रव्यसमवेतप्रत्यक्षं प्रति स्वाश्रयसमवायसम्बन्धेन द्रव्यसमवेतसमवेतस्य रूपत्वादेः प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेनेति ॥ ५४ ॥

उद्भूतस्पर्शवद् द्रव्यं । गोचरस्त्वचो गोचरः । सोऽपि उद्भूतस्पर्शोऽपि स्पर्शत्वादिसहितः ॥ रूपान्यदिति । रूपभिन्नं रूपत्वादिभिन्नस्य चक्षुषो यद् योग्यं तत् त्वगिन्द्रियस्यापि ग्राह्यं। तथा च पृथक्त्वादिसङ्ख्यादयो ये चक्षुर्ग्राह्या गुणा उक्ता एवं क्रिया एवं जातयो योग्यवृत्तयश्च ते त्वचो ग्राह्या इति। अत्रापि त्वगिन्द्रियजन्येऽपि रूपं द्रव्यप्रत्यक्षे कारणं। तथा च वहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणमिति ॥ नवीनास्तु वहिर्द्रव्यप्रत्यक्षे रूपं न कारणं प्रमाणाभावात् किन्तु चाक्षुषप्रत्यक्षे रूपं स्पार्शनप्रत्यक्षे स्पर्शःकारणं अन्वयव्यतिरेकात् ॥ वहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे किं कारणमिति चेत् । न। किञ्चिदात्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वं वा प्रयोजकमस्तु ॥ रूपस्य कारणत्वे लाघवमिति चेत् । न । वायोस्त्वगिन्द्रियेणाग्रहणप्रसङ्गात् ॥ इष्टापत्तिरिति चेत् । स्पर्श एव लाघवात् कारणमस्तु । प्रभाया अप्रत्यक्षत्वे लिष्टापत्तिरित्येव किं न स्यात् । तस्मात् प्रभां पश्यामीतिवद् वायुं

भाषा० रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणं ॥ ५५ ॥
द्रव्याध्यक्षे त्वचो योगो मनसा ज्ञानकारणं ।

---

सिद्धा० स्पृशामीति प्रत्ययस्य सत्त्वाद् वायोरपि प्रत्यक्षं भवत्येव। बहिर्द्रव्यप्रत्यक्षमात्रे तु न रूपस्य न वा स्पर्शस्य हेतुत्वं वायुप्रभयोरेकत्वं गृह्यत एव क्वचित् द्वित्वादिकमपि क्वचित् सङ्ख्यापरिमाणाद्यग्रहो दोषादित्याहुः ॥ ५५ ॥

त्वचो योगो मनसा ज्ञानकारणमिति। त्वङ्मनःसंयोगो ज्ञानसामान्ये कारणमित्यर्थः॥ किं तत्र प्रमाणं सुषुप्तिकाले त्वचं त्यक्त्वा पुरीततिवर्त्तमानेन मनसा ज्ञानाजननमिति॥ ननु सुषुप्तिकाले किं ज्ञानं भविष्यति अनुभवरूपं स्मरणरूपं वा। नाद्यः। अनुभवसामग्र्यभावात्। तथा हि। चाक्षुषादिप्रत्यक्षे चक्षुरादिना सह मनःसंयोगस्य हेतुत्वात्। तदभावादेव न चाक्षुषादिप्रत्यक्षं ज्ञानादेरभावादेव न मानसप्रत्यक्षं ज्ञानाद्यभावेनात्मनोऽपि प्रत्यक्षमिति व्याप्तिज्ञानाभावान् नानुमितिः। सादृश्यज्ञानाभावान् नोपमितिः। पदज्ञानाभावात् न शाब्दबोध इति। अनुभवसामग्र्यभावान् नानुभवः। उद्बोधकाभावाच्च न स्मरणं। मैवं सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेस्तत्सम्बन्धेनात्मनश्च प्रत्यक्षप्रसङ्गाद् तदतीन्द्रियत्वे मानाभावात् सुषुप्तिप्राक्काले निर्विकल्पकमेव जायत इत्यत्रापि प्रमाणाभावात्। अथ ज्ञानमात्रे त्वङ्मनःसंयो-

भाषा० मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः ॥ ५७ ॥
ज्ञानं यन्निर्व्विकल्पाख्यं तदतीन्द्रियमिष्यते ।

---

सिद्धा० गस्य यदि कारणत्वं तदा रासनचाक्षुषादिप्रत्यक्षकाले स्पार्शनप्रत्यक्षं स्यात् । विषयत्वक्संयोगस्य त्वङ्मनःसंयोगस्य च सत्त्वात् । परस्परप्रतिबन्धादेकमपि वा न स्यादिति । अत्र केचित् पूर्व्वोक्तयुक्त्या त्वङ्मनोयोगस्य हेतुत्वे सिद्धे चाक्षुषादिसामग्र्याः स्पार्शनादिप्रतिबन्धकत्वमनुभवानुरोधात् कल्प्यत इति । अन्ये तु सुषुप्त्यनुरोधात् चर्म्ममनःसंयोगस्य ज्ञानहेतुत्वं कल्प्यं चाक्षुषादिप्रत्यक्षकाले त्वङ्मनःसंयोगाभावान्न स्पार्शनप्रत्यक्षमिति वदन्ति॥ मनोग्राह्यं सुखं दुःखमिच्छाद्वेषो मतिः कृतिरिति । मनोजन्यप्रत्यक्षविषय इत्यर्थः । मतिर्ज्ञानं । कृतिः प्रयत्नः । एवं सुखत्वादिकमपि मनोग्राह्यं । एवमात्मापि मनोग्राह्यः । किन्तु मनोमात्रस्य गोचर इत्यनेन पूर्व्वमुक्तत्वाद् अत्र नोक्तः ॥ ५७ ॥

ज्ञानं यन्निर्व्विकल्पाख्यं तदतीन्द्रियमिष्यत इति । चक्षुःसंयोगाद्यनन्तरं घट इत्याकारं घटत्वादिविशिष्टं ज्ञानं न सम्भवति । पूर्व्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात् । विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात् । तथा च प्रथमतो घटघटत्वयोर्वैशिष्ट्यानवगाहि ज्ञानं जायते तदेव निर्व्विकल्पकात्मकं तच्च न प्रत्यक्षं । तथा

भाषा० महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतं ॥ ५७ ॥

सिद्धा० हि विषयानवगाहिज्ञानस्य प्रत्यक्षं न भवति। घटमहं जानामीति प्रत्ययात्। तत्रात्मनि ज्ञानं प्रकारीभूय भासते। ज्ञाने घटस्तत्र घटत्वं यः प्रकारः स एव विशेषणमित्युच्यते। विशेषणे यद्विशेषणं तद्विशेषणतावच्छेदकमित्युच्यते। विशेषणतावच्छेदकप्रकारकं ज्ञानं विशिष्टवैशिष्ट्यज्ञानकारणं। निर्व्विकल्पके च घटत्वादिकं न प्रकारः। तेन घटत्वादिविशिष्टघटादिवैशिष्ट्यभानं ज्ञाने न सम्भवति। *जात्यतिरिक्तपदार्थज्ञानस्य किञ्चिद्धर्म्मप्रकारकत्वनियमात् ॥

महत्त्वं षड्विधे हेतुरिति। द्रव्यप्रत्यक्षे महत्त्वं समवायसम्बन्धेन कारणं। द्रव्यसमवेतानां जातिगुणकर्म्मणां प्रत्यक्षे स्वाश्रयसमवायसम्बन्धेन कारणं। द्रव्यसमवेतसमवेतानां गुणत्वकर्म्मत्वरूपत्वादीनां प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेन कारणमिति ॥ इन्द्रियमिति। अत्रापि षड्विध इत्यनुषज्यते। इन्द्रियत्वन्तु न जातिः। पृथिवीत्वादिना साङ्कर्य्यप्रसङ्गात्। किन्तु शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वं आत्मादिवारणाय सत्यन्तं। उद्भूतविशेषगुणस्य शब्दस्य श्रोत्रे सत्त्वात्। शब्देतरेति विशेषणस्य

* घटत्वाद्यप्रकारकं घटादिविशिष्टज्ञानं न सम्भवति। इति पूर्व्वमुद्रितः पाठोऽनाकरः ।

भाषा० विषयेन्द्रियसम्बन्धो व्यापारः सोऽपि षड्विधः।

---

सिद्धा० रूपादेश्चक्षुषि सत्वात्। उद्भूतेति उद्भूतत्वं न जातिः शुक्लत्वादिना सङ्करात्॥ न च शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यं उद्भूतरूपत्वादिना चाक्षुषादौ जनकतानुपपत्तेः। किन्तु शुक्लत्वादिव्याप्यमनुद्भूतत्वं नाना तदभावकूटस्योद्भूतत्वं। तच्च संयोगादावपि। तथा च शब्देतरोद्भूतगुणः संयोगादिश्चक्षुरादेरस्तीति विशेषेति। कालादिवारणाय विशेष्यदलं। इन्द्रियावयवविषयसंयोगस्यापि प्राचां मते प्रत्यक्षजनकत्वात्। इन्द्रियावयववारणाय कालादौ रूपाभावप्रत्यक्षे सन्निकर्षघटकतया कारणीभूतचक्षुःसंयोगाद्याश्रयस्य कालादेश्च वारणाय मनःपदं ज्ञानकरणमित्यपि तद्वारणाय कारणमिति। असाधारणं कारणं करणं। असाधारणत्वं व्यापारवत्त्वं॥ ५७॥

विषयेन्द्रियसम्बन्धो व्यापारः सोऽपि षड्विध इति। व्यापारः सन्निकर्षः॥ षड्विधं सन्निकर्षमुदाहरणद्वारा दर्शयति। द्रव्यग्रह इति। द्रव्यप्रत्यक्षमिन्द्रियसंयोगजन्यं। द्रव्यसमवेतप्रत्यक्षं इन्द्रियसंयुक्तसमवायजन्यं। एवमग्रेऽपि॥ वस्तुतस्तु द्रव्यचाक्षुषं प्रति चक्षुःसंयोगः कारणं। द्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवायः। द्रव्यसमवेतसमवेतचाक्षुषं प्रति संयुक्तसमवेतसमवायः। एवम-

भाषा० द्रव्यग्रहस्तु संयोगात् संयुक्तसमवायतः ॥ ५८ ॥

---

सिद्धा० अत्रापि विशिष्यैव कार्यकारणभावः । परन्तु परमाणुनीले नीलत्वं पृथिवीपरमाणौ पृथिवीत्वञ्च चक्षुषा कथं न गृह्यते । तत्र परम्परया उद्भूतरूपसम्बन्धस्य महत्त्वसम्बन्धस्य च विद्यमानत्वात् । तथा हि नीलत्वं जातिरेकैव घटनीले परमाणुनीले च वर्त्तते । तथा च महत्त्वसम्बन्धो घटनीलमादाय वर्त्तते । रूपसम्बन्धस्तूभयमादायैव वर्त्तते । एवं पृथिवीत्वे घटादिकमादाय महत्त्वसम्बन्धो बोध्यः । एवं वायौ तदीयस्पर्शादौ च सत्तायाश्चाक्षुषप्रत्यक्षं स्यात् । तस्मादुद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायस्य द्रव्यसमवेतचाक्षुषप्रत्यक्षे तादृशचक्षुःसंयुक्तसमवेतसमवायस्य द्रव्यसमवेतसमवेतचाक्षुषे कारणत्वं वाच्यं । इत्थञ्च परमाणुनीलादौ न नीलत्वादिग्रहः । परमाणुचक्षुःसंयोगस्य महत्त्वावच्छिन्नत्वाभावात् ॥ एवं वाय्वादौ न सत्त्वादिचाक्षुषं । तत्र चक्षुःसंयोगस्य रूपावच्छिन्नत्वाभावात् । एवं यत्र घटस्य मध्यावच्छेदेनालोकसंयोगश्चक्षुःसंयोगस्तु बाह्यावच्छेदेन तत्र घटप्रत्यक्षाभावादालोकसंयोगावच्छिन्नत्वं चक्षुःसंयोगे विशेषणं देयं ॥ एवं द्रव्यस्पार्शनप्रत्यक्षे त्वक्संयोगः कारणं । द्रव्यसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवायः । द्रव्यसमवेतसमवेतस्पार्शनप्रत्यक्षे

भाषा॰ द्रव्येषु समवेतानां शब्दस्य समवायतः ॥ ५९ ॥
तद्वृत्तीनां समवेतसमवायेन तु ग्रहः ।

---

सिद्धा॰ त्वक्संयुक्तसमवेतसमवायः कारणं । अत्रापि महत्त्वावच्छिन्नत्वं उद्भूतस्पर्शावच्छिन्नत्वञ्च पूर्व्ववदेव बोध्यं ॥ एवं गन्धप्रत्यक्षे घ्राणसंयुक्तसमवायः । गन्धसमवेतस्य घ्राणजन्यप्रत्यक्षे घ्राणसंयुक्तसमवेतसमवायः कारणं ॥ एवं रसप्रत्यक्षे रसनासंयुक्तसमवायः । रससमवेतस्य रासनप्रत्यक्षे रसनासंयुक्तसमवेतसमवायः कारणं । शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसमवायः । शब्दसमवेतश्रावणप्रत्यक्षे श्रोत्रावच्छिन्नसमवेतसमवायः कारणं ॥ अत्र सर्व्वत्र प्रत्यक्षं लौकिकं बोध्यं । वक्ष्यमाणमलौकिकं प्रत्यक्षं इन्द्रियसंयोगादिकं विनापि भवति ॥ एवमात्मनः प्रत्यक्षे मनःसंयोगः । आत्मसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवायः । आत्मसमवेतसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायः कारणं । अभावप्रत्यक्षे समवायप्रत्यक्षे च इन्द्रियसम्बन्धविशेषणता हेतुः ॥

वैशेषिकमते तु न समवायः प्रत्यक्षः । अत्र यद्यपि विशेषणता नानाविधा तथा हि भूतलादौ घटाभावः संयुक्तविशेषणतया गृह्यते । सङ्ख्यादौ रूपाद्यभावः संयुक्तसमवेतविशेषणतया । संख्यात्वादौ रूपाद्यभावः संयुक्तसमवेतसमवेतविशेषणतया । शब्दाभावः केवल-

भाषा० विशेषणतया तद्वदभावानां ग्रहो भवत् ॥ ६० ॥
यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ।

---

सिद्धा० श्रोत्रावच्छिन्नविशेषणतया । कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया । एवं कत्वावच्छिन्ना-भावे खत्वाभावादिकं विशेषणविशेषणतया । एवं घटा-भावादौ पटाद्यभावः संयुक्तविशेषणविशेषणतया । एवमन्यदप्यूह्यं। तथापि विशेषणतात्वरूपेणैकैव सा गण्यते अन्यथा षोढा सन्निकर्ष इति प्राचां प्रवादो व्याहन्ये-तेति ॥ ५८ ॥ ५९ ॥ ६० ॥

यदि स्यादुपलभ्येतेति । अभावप्रत्यक्षे योग्यानु-पलब्धिः कारणं । तथाहि भूतलादौ घटादिज्ञाने जाते घटाभावादिकं न ज्ञायते तेनाभावोपलम्भे प्रतियोग्युपलम्भाभावः कारणं। तत्रापि योग्यताप्यपे-क्षिता। सा च प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियो-गिकत्वरूपा। तदर्थश्च प्रतियोगिनो घटादेः सत्त्वप्रसक्त्या प्रसञ्जित उपलम्भरूपः प्रतियोगी यस्य स उपलम्भा-भावोऽभावप्रत्यक्षे हेतुः । तथा हि। यत्रालोकसंयोगा-दिकं वर्त्तते तत्र यद्यत्र घटः स्यात् तर्हि उपलभ्येत इत्यापादयितुं शक्यते। तत्र घटाभावादिप्रत्यक्षं भवति अन्धकारे तु नापादयितुं शक्यत इति। तेन घटाभा-वादेरन्धकारे चाक्षुषप्रत्यक्षं न स्यात्स्पार्शनप्रत्यक्षन्तु भवत्येव।

भाषा॰ प्रत्यक्षं समवायस्य विशेषणतया भवेत् ॥ ६१ ॥
अलौकिकः सन्निकर्षस्त्रिविधः परिकीर्त्तितः ।

---

सिद्धा॰ आलोकसंयोगं विनापि स्पार्शनप्रत्यक्षस्यापादयितुं शक्यत्वात्। गुरुत्वादिकं यद्योग्यं तदभावस्तु न प्रत्यक्षः। तत्र गुरुत्वादिप्रत्यक्षस्यापादयितुमशक्यत्वात् । वायौ रूपाभावः। पाषाणे सौरभाभावः। गुडे तिक्ताभावः। श्रोत्रे शब्दाभावः। आत्मनि सुखाभावः। एवमादयस्तत्तदिन्द्रियैर्गृह्यन्ते। तत्तत्प्रत्यक्षस्यापादयितुं शक्यत्वात्। संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता। अन्योन्याभावप्रत्यक्षे त्वधिकरणयोग्यताऽपेक्षिता। अतस्तम्भादौ पिशाचादिभेदोऽपि चक्षुषा गृह्यत एव ॥६१॥

प्रत्यक्षं लौकिकालौकिकभेदेन द्विविधं। तत्र लौकिकप्रत्यक्षे षोढा सन्निकर्षा वर्णिताः। अलौकिकसन्निकर्षानिदानीं वदति। अलौकिक इति। व्यापारः सन्निकर्षः। सामान्यलक्षणेति। सामान्यं लक्षणं यस्या इत्यर्थः। तत्र लक्षणपदेन यदि स्वरूपमुच्यते तदा सामान्यस्वरूपं प्रत्यासत्तिरित्यर्थो लभ्यते। तच्चेन्द्रियसम्बद्धविशेष्यकज्ञाने प्रकारीभूतं बोध्यं। तथा हि यत्र इन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं जातं। तत्र ज्ञाने धूमत्वं प्रकारः। धूमत्वेन सन्निकर्षेण धूम इत्येवं रूपं सकलधूमविषयकं ज्ञानं जायते।

भाषा० सामान्यलक्षणा ज्ञानलक्षणा योगजस्तथा ॥ ६२ ॥
आसत्तिराश्रयाणान्तु सामान्यज्ञानमिष्यते ।

---

सिद्धा० अत्र यदि इन्द्रियसम्बद्धमित्येवोच्यते तदा धूलीपटले धूमत्वभ्रमानन्तरं सकलधूमविषयकं ज्ञानं न स्यात्। तत्र धूमत्वेन सह इन्द्रियसम्बन्धाभावात्। मन्मते तु इन्द्रियसम्बद्धं धूलीपटलं तद्विशेष्यकधूम इति ज्ञानं। तत्र प्रकारीभूतं धूमत्वं प्रत्यासत्तिः ॥ इन्द्रियसम्बन्धो लौकिको ग्राह्यः। इदञ्च बहिरिन्द्रियस्थले। मानसस्थले तु ज्ञानप्रकारीभूतसामान्यमात्रं प्रत्यासत्तिः। अतः शब्दादिना यत्किञ्चित् पिशाचाद्युपस्थितौ मानसः सकलपिशाचादिबोध उपपद्यते ॥ परन्तु समानानां भावः सामान्यं। तच्च क्वचिन्नित्यं धूमत्वादि क्वचिदनित्यं घटादि। यत्रैको घटः संयोगेन भूतले समवायेन कपाले ज्ञातस्तदनन्तरं सर्व्वेषामेव तद्घटवतां भूतलादीनां कपालादीनां वा ज्ञानं भवति ॥ अत्रेदं बोध्यं सामान्यं येन सम्बन्धेन ज्ञायते तेन सम्बन्धेन अधिकरणानां प्रत्यासत्तिः। किन्तु यत्र तद्घटनाशानन्तरं तद्घटवतः स्मरणं जातं तत्र सामान्यलक्षणया सर्व्वेषां तद्घटवतां ज्ञानं न स्यात्। सामान्यस्य तदानीमभावात्॥ ६२ ॥

किञ्च इन्द्रियसम्बद्धविशेष्यकं घट इति ज्ञानं। तत्र परदिने इन्द्रियसम्बन्धं विनापि तादृशज्ञान-

भाषा० तदिन्द्रियजतद्धर्म्मबोधसामग्र्यपेक्ष्यते ॥ ६३ ॥

---

सिद्धा० प्रकारीभूतसामान्यस्य सत्त्वात् तादृशज्ञानं कुतो न जायते। तस्मात् सामान्यज्ञानं प्रत्यासत्तिर्न तु सामान्यमित्याह। आसत्तिरित्यादि॥ आसत्तिः प्रत्यासत्तिरित्यर्थः। तथा च सामान्यलक्षणेत्यत्र लक्षणशब्दस्य विषयोऽर्थः। तेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिरित्यर्थो लभ्यते॥ ननु चक्षुःसंयोगादिकं विनापि सामान्यज्ञानं यत्र वर्त्तते तत्र सकलघटादीनां चाक्षुषादिप्रत्यक्षं स्यादत आह। तदिन्द्रियज इति॥ अस्यार्थः यदा वहिरिन्द्रियेण सामान्यलक्षणया ज्ञानं जननीयं तदा यत्किञ्चिद्धर्म्मिणि तत्सामान्यस्य तदिन्द्रियजन्यज्ञानसामग्री अपेक्षिता। सा च सामग्री चक्षुःसंयोगालोकसंयोगादिकं। तेनान्धकारादौ चक्षुरादिना तादृशज्ञानं न जायते॥ ६३॥

ननु ज्ञानलक्षणा प्रत्यासत्तिर्यदि ज्ञानरूपा सामान्यलक्षणापि ज्ञानरूपा तदा तयोर्भेदो न स्यादत आह। विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणा इति। सामान्यलक्षणाप्रत्यासत्तिर्हि तदाश्रयस्य ज्ञानं जनयति। ज्ञानलक्षणाप्रत्यासत्तिस्तु यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिरिति। अत्रायमर्थः। प्रत्यक्षे सन्निकर्षं विना भानं न सम्भवति। तथा च सामान्यलक्षणां विना धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनाञ्च भानं

भाषा० विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणा ।
योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ॥ ६४ ॥

---

सिद्धा० कथं भवतु तदर्थं सामान्यलक्षणा स्वीक्रियेत ॥ न च सकलवह्निधूमभानाभावे का क्षतिरिति वाच्यं प्रत्यक्षधूमे वह्निसम्बन्धस्य गृहीतत्वात् । अन्यधूमस्य चानुपस्थितत्वाद्धूमो वह्निव्याप्यो न वेति संशयानुपपत्तिः । मन्मते तु सामान्यलक्षणया सकलधूमोपस्थितौ कालान्तरीयदेशान्तरीयधूमे वह्निव्याप्यत्वसन्देहः सम्भवति ॥ न च सामान्यलक्षणास्वीकारे प्रमेयत्वेन सकलप्रमेये ज्ञाते सार्व्वज्ञापत्तिरिति वाच्यं । प्रमेयत्वेन सकलप्रमेये ज्ञातेऽपि विशिष्य सकलपदार्थानामज्ञातत्वेन सार्व्वज्ञाभावात् ॥ एवं ज्ञानलक्षणाया अस्वीकारे सुरभिचन्दनमिति ज्ञाने सौरभस्य भानं कथं स्यात् । यद्यपि सामान्यलक्षणयापि सौरभभानं सम्भवति तथापि सौरभत्वस्य भानं ज्ञानलक्षणया । एवं यत्र धूमत्वेन धूलीपटलं ज्ञातं तत्र धूलीपटलस्यानुव्यवसाये भानं ज्ञानलक्षणया ॥

योगजो द्विविध इति । योगाभ्यासजनितो धर्म्मविशेषः श्रुतिपुराणादिप्रमाणक इत्यर्थः । युक्तयुञ्जानभेदत इति । युक्तयुञ्जानरूपयोगिद्वैविध्याद्धर्म्मस्यापि द्वैविध्यमिति भावः ॥ ६४ ॥

भाषा० युक्तस्य सर्व्वदा भानं चिन्तासहकृतोऽपरः ।
व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥ ६५ ॥
अनुमायां ज्ञायमानं लिङ्गन्तु करणं न हि ।

---

सिद्धा० युक्तस्य सर्व्वदा भानमिति । योगाभ्यासवशीकृतमानसः समाधिसमासादितविविधसिद्धियुक्त इत्युच्यते । अयमेव विशिष्टयोगवत्त्वाद् वियुक्त इत्यप्युच्यते। सर्व्वदेति। चिन्तासहकारित्वं विनेत्यर्थः । भानं सर्व्वविषयाणां प्रत्यक्षं । अपरो युञ्जानो विषयव्यावृत्तमानसः। चिन्ता ध्यानं मनसस्तदेकाग्रीकरणं । तत् सहकारात् स्थूलसूक्ष्माव्यवहितविप्रकृष्टानर्थान् प्रत्यक्षीकरोतीत्यर्थः ॥

अनुमितिं व्युत्पादयति ॥ व्यापारस्त्विति । अनुमायां अनुमितौ व्याप्तिज्ञानं करणं। परामर्शो व्यापारः। तथाहि येन पुरुषेण महानसादौ धूमे वह्नेर्व्याप्तिर्दृष्टा पश्चात् स एव पुरुषः क्वचित् पर्व्वतादौ अविच्छिन्नधूमां धूमलेखां पश्यति तदनन्तरं धूमो वह्निव्याप्य इत्येवंरूपं व्याप्तिस्मरणं भवति । तस्माच्च वह्निव्याप्यधूमवानयमिति ज्ञानं भवति स एव परामर्श इत्युच्यते। तदनन्तरं पर्व्वतोऽयं वह्निमानिति ज्ञानं जायते । तदेवानुमितिः। अत्र प्राचीनास्तु व्याप्यत्वेन ज्ञायमानं धूमादिकमनुमितिकरणं। तद्दूषयति ज्ञायमानमिति ॥

भाषा० अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥ ६६ ॥
व्याप्तस्य पक्षवृत्तित्वधीः परामर्श उच्यते ।

---

भङ्का० लिङ्गस्यानुमित्यकरणत्वे युक्तिमाह ॥ अनागता-दीति । यद्यनुमितौ लिङ्गं करणं स्यात् तदा अना-गतेन विनष्टेन वा लिङ्गेन अनुमितिर्न स्यात् । अनु-मितिकरणस्य लिङ्गस्य तदानीमभावात् ॥ ६५ ॥ ६६ ॥

व्याप्तस्य पक्षधर्मत्वधीरिति । व्याप्तिविशिष्टस्य पक्षेण सह वैशिष्ट्यावगाहिज्ञानमनुमितिजनकं । तच्च व्याप्यः पक्षे इति ज्ञानं। पक्षो व्याप्यवानिति ज्ञानं वा। अनुमि-तिस्तु पक्षे व्याप्य इति ज्ञानात् पक्षे साध्यं इत्याका-रिका। पक्षो व्याप्यवानिति ज्ञानात् पक्षः साध्यवानि-त्याकारिका ॥ द्विविधादपि परामर्शात् पक्षः साध्य-वानित्येवानुमितिरित्यन्ये । ननु वह्निव्याप्यधूमवान् पर्व्वत इति ज्ञानं विनापि यत्र पर्व्वतो धूमवानिति प्रत्यक्षं ततो धूमो वह्निव्याप्य इति स्मरणं भवति । तत्र ज्ञानद्वयादनुमितिदर्शनात् । व्याप्तिविशिष्टवैशि-ष्ट्यावगाहिज्ञानं सर्व्वत्र न कारणं किन्तु व्याप्यताव-च्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन कारणत्वं आवश्य-कत्वात् । विशिष्टवैशिष्ट्यज्ञानकल्पने गौरवाच्चेति चेन्न । व्याप्यतावच्छेदकाज्ञानेऽपि वह्निव्याप्यवानिति ज्ञाना-दनुमित्युत्पत्तेः । लाघवाच्च व्याप्तिप्रकारकपक्षधर्मता-

भाषा० व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः ॥ ६७ ॥

---

सिद्धा० ज्ञानत्वेनैव कारणत्वं। किञ्च धूमवान् पर्वत इति ज्ञानादनुमित्यापत्तिः। व्याप्यतावच्छेदकीभूतधूमत्वप्रकारकपक्षधर्मताज्ञानस्य सत्त्वात् ॥ न च तदानीं गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्य हेतुत्वमिति वाच्यं। चैत्रस्य व्याप्तिग्रहे मैत्रस्य पक्षधर्मताज्ञानादनुमितिः स्यादिति। यदि तु तत्पुरुषीयगृह्यमाणव्याप्यतावच्छेदकप्रकारकतत्पुरुषीयपक्षधर्मताज्ञानं तत्पुरुषीयानुमितौ हेतुरुच्यते तदा अनन्तकार्यकारणभावः॥ मन्मते तु समवायेन व्याप्तिप्रकारकपक्षधर्मताज्ञानं समवायेनानुमितिं जनयतीत्यर्थे नानन्तकार्यकारणभावः। यदि तु व्याप्तिप्रकारकं ज्ञानं पक्षधर्मताज्ञानञ्च स्वतन्त्रं कारणमित्युच्यते तदा कार्यकारणभावद्वयं वह्निव्याप्यो धूम आलोकवान् पर्वत इति ज्ञानादप्यनुमितिः स्यादिति। इत्थञ्च यत्र ज्ञानद्वयं तत्रापि विशिष्टज्ञानं कल्पनीयं। फलमुखगौरवस्यादोषत्वात् इति ॥

व्याप्यो नाम व्याप्त्याश्रयः तत्र का व्याप्तिरित्यत आह ॥ व्याप्तिरिति। साध्यवदन्येति। वह्निमान् धूमादित्यादौ साध्यो वह्निः। साध्यवान् महानसादिः। तदन्यो जलह्रदादिः। तदवृत्तित्वं धूमस्येति लक्षणसमन्वयः

भाषा० अथवा हेतुमन्निष्ठविरहाप्रतियोगिना ।

---

सिद्धा० धूमवान् वह्नेरित्यादौ साध्यवदन्यस्मिन्नयःपिण्डादौ वह्निमत्त्वान्नातिव्याप्तिः । अत्र येन सम्बन्धेन साध्यं तेनैव सम्बन्धेन साध्यवान् बोध्यः । अन्यथा समवायसम्बन्धेन वह्निमान् वह्नेरवयवस्तदन्यो महानसादिः। तत्र धूमस्य विद्यमानत्वादव्याप्तिप्रसङ्गात् । साध्यवदन्यश्च साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवान् बोध्यः । तेन यत्किञ्चिद्वह्निमान् महानसादिः तद्भिन्ने पर्व्वतादौ धूमस्य सत्त्वेऽपि न क्षतिः। येन सम्बन्धेन हेतुता तेन सम्बन्धेन साध्यवदन्यावृत्तित्वं बोध्यं । तेन साध्यवदन्यस्मिन् धूमावयवे धूमस्य समवायसम्बन्धेन सत्त्वेऽपि न क्षतिः । साध्यवदन्यावृत्तित्वं साध्यवदन्यवृत्तित्वत्वावच्छिन्नाभावः । तेन धूमवान् वह्नेरित्यत्र साध्यवदन्यमहानसादिवृत्तित्वाभावेऽपि नातिव्याप्तिः । अत्र यद्यपि द्रव्यं गुणकर्म्मान्यत्वविशिष्टसत्त्वादित्यादौ विशिष्टसत्तायाः सत्तायाश्चैक्यात् साध्यवदन्यस्मिन् गुणादाववृत्तित्वं नास्तीति तथापि हेतुतावच्छेदकरूपेणावृत्तित्वं वाच्यं । हेतुतावच्छेदकं तादृशवृत्तितानवच्छेदकमिति फलितार्थः । ननु केवलान्वयिज्ञेयत्वादौ साध्ये साध्यवदन्याप्रसिद्धत्वादव्याप्तिः ॥ ६७ ॥

किञ्च सत्तावान् जातेरित्यादौ साध्यवदन्यस्मिन्

भाषा० साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥ ६८ ॥

सिद्धा० सामान्यादौ हेतुतावच्छेदकसम्बन्धेन समवायेन वृत्ते-रप्रसिद्धत्वादव्याप्तिस्तत आह ॥ अथवा हेतुमन्निष्ठेति। हेतुमति निष्ठा वृत्तिर्यस्य स तथा। विरहोऽभावः। तथा च हेत्वधिकरणवृत्तिर्योऽभावः तदप्रतियोगिना साध्येन सह हेतोः सामानाधिकरण्यं व्याप्तिः। यद्यपि वह्निमान् धूमादित्यादौ हेत्वधिकरणपर्व्वतादिवृत्त्य-भावप्रतियोगित्वं तत्तद्वह्न्यादेरस्तीत्यव्याप्तिः ॥ न च समानाधिकरणवह्निधूमयोरेव व्याप्तिरिति वाच्यं। तद्वह्नेरुभयाभाववत्त्वादेकसत्त्वेऽपि द्वयं नास्तीति प्रतीतेः। गुणवान् द्रव्यत्वादित्यादावव्याप्तेश्च। तथापि साध्यतावच्छेदकं प्रतियोगितानवच्छेदकं तदवच्छिन्न-सामानाधिकरण्यं व्याप्तिरिति वाच्यं ॥ ननु रूपत्वव्याप्यजातिमान् पृथिवीत्वादित्यादौ साध्यतावच्छेदक-रूपत्वव्याप्यजातयस्तासां शुक्लत्वादिरूपाणां नीलघटादिवृत्त्यभावप्रतियोगितावच्छेदकत्वमस्तीत्यव्याप्तिरिति चेन्न। तत्र परम्परया रूपत्वव्याप्यजातिमत्त्वस्यैव साध्यतावच्छेदकत्वात्। न हि तादृशधर्मावच्छिन्नाभावः क्वापि पृथिव्यामस्ति। रूपत्वव्याप्यजातिमान् नास्तीति बुद्ध्यापत्तेः। साध्यादिभेदेन व्याप्तेर्भेदात्। तादृशस्थले साध्यतावच्छेदकतावच्छेदकं प्रतियोगितावच्छेदकता-

सिद्धा॰ नवच्छेदकमित्येवं लक्षणघटकमित्यपिवदन्ति । एवं दण्डादौ साध्ये परम्परासम्बन्धं दण्डत्वादिकमेव साध्यतावच्छेदकं प्रतियोगितानवच्छेदकमिति वाच्यं । हेत्वधिकरणञ्च हेतुतावच्छेदकविशिष्टाधिकरणं वाच्यं । तेन द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ शुद्धसत्ताधिकरणगुणादिनिष्ठाभावप्रतियोगित्वेऽपि द्रव्यत्वस्य नाव्याप्तिः । हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणं बोध्यं । तेन समवायेन धूमाधिकरणतदवयवनिष्ठाभावप्रतियोगित्वेऽपि वह्नेर्नाव्याप्तिः । अभावश्च प्रतियोगिव्यधिकरणो बोध्यः । तेन कपिसंयोगी एतद्वृक्षत्वादित्यादौ मूलावच्छेदेनैव एतद्वृक्षवृत्तिकपिसंयोगाभावप्रतियोगित्वेऽपि संयोगस्य नाव्याप्तिः ॥ न च प्रतियोगिव्यधिकरणत्वं प्रतियोग्यनधिकरणवृत्तित्वं । तदा तथैवाव्याप्तिः । प्रतियोगिनः कपिसंयोगस्यानधिकरणगुणादौ वर्त्तते योऽभावस्तस्यैव मूलावच्छेदेन सत्त्वात् । यदि प्रतियोग्यधिकरणावृत्तित्वं तदा संयोगिसत्त्वादित्यादावतिव्याप्तिः । सत्ताधिकरणे गुणादौ यः संयोगाभावस्तस्य प्रतियोग्यधिकरणद्रव्यावृत्तित्वादिति वाच्यं । हेत्वधिकरणे प्रतियोग्यनधिकरणवृत्तित्वविशिष्टस्य विवक्षितत्वात् । स्वप्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभाव इति निष्कर्षः । प्रतियोग्यनधिकरणं स्वप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणं

सिद्धा॰ साध्यं। तेन विशिष्टसत्तावान् जातेरित्यादै। जात्यधिकरणगुणादै। विशिष्टसत्ताभावप्रतियोगिसमानाधिकरणत्वेऽपि न क्षतिः। एवं साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वं बोध्यं। तेन ज्ञानवान् द्रव्यत्वादित्यादै। द्रव्यत्वाधिकरणघटादेर्विषयतासम्बन्धेन ज्ञानाधिकरणत्वेऽपि न क्षतिः। इत्थञ्च वह्निमान् धूमादित्यादै। धूमाधिकरणे समवायेन वह्निविरहसत्त्वेऽपि न क्षतिः॥ ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित् तत्सामान्यस्य वा अनधिकरणत्वं। यत् किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नस्य वानधिकरणत्वमुक्तं। आद्ये कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिः। कपिसंयोगाभावस्य हि प्रतियोगितावच्छेदकावच्छिन्नो वृक्षाहत्तिरपि कपिसंयोगो भवति तदनधिकरणञ्च वृक्ष इति। द्वितीये प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः। सर्व्वस्यैवाभावस्य पूर्व्वक्षणवृत्तित्वविशिष्टस्वभावात्मकप्रतियोगिसमानाधिकरणत्वात्॥ न च वह्निमान् धूमादित्यादै। घटाभावादेः पूर्व्वक्षणवृत्तित्वविशिष्टस्वभावात्मकप्रतियोग्यधिकरणत्वं यद्यपि पर्व्वतादेस्तथापि साध्यतावच्छेदकसम्बन्धेन तत्प्रतियोग्यनधिकरणवृत्तित्वमस्त्येवेति कथमप्रसिद्धिरिति वाच्यं। घटाभावे यो वह्न्यभावस्तस्य घटाभावात्मकतया घटाभावस्य वह्निरपि प्रतियोगी तदधिकरणञ्च पर्व्वतादीति क्रमेण

सिद्धा॰ प्रतियोगिव्यधिकरणस्याप्रसिद्धत्वात्। यदि च घटाभावादौ वह्न्यभावादिर्भिन्न इत्युच्यते तथापि धूमाभाववान् वह्न्यभावादित्यादावव्याप्तिः। तत्र साध्यतावच्छेदकसम्बन्धः स्वरूपसम्बन्धः। तेन सम्बन्धेन सर्व्वस्यैवाभावस्य च पूर्व्वक्षणवृत्तित्वविशिष्टस्वभावात्मकप्रतियोग्यधिकरणत्वं हेत्वधिकरणस्येति। तृतीये तु कपिसंयोगाभाववान् आत्मत्वादित्यादावव्याप्तिः। तत्रात्मवृत्तिकपिसंयोगाभावाभावः कपिसंयोगस्तस्य च गुणत्वात् तत्प्रतियोगितावच्छेदकं गुणसामान्याभावत्वमपि तदवच्छिन्नानधिकरणत्वं हेत्वधिकरणस्यात्मन इति। नैवं। यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात्॥ ननु कालो घटवान् कालपरिमाणाद् इत्यत्राव्याप्तिः। प्रतियोगिव्यधिकरणाभावाप्रसिद्धेर्हेत्वधिकरणस्य महाकालस्य जगदाधारतया सर्व्वेषामभावानां साध्यतावच्छेदकसम्बन्धेन कालिकविशेषणतया प्रतियोग्यधिकरणत्वात्॥ अत्र केचित् महाकालभेदविशिष्टघटाभावस्तत्र प्रतियोगिव्यधिकरणमहाकालस्य घटाधारत्वेऽपि महाकालभेदविशिष्टघटानाधारत्वात्। महाकाले महाकालभेदाभावात्॥ वस्तुतस्तु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यत्-

सिद्धा० सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य तत्र हेतुव्यापकत्वं बोध्यं। व्यापकसामानाधिकरण्यञ्च व्याप्तिः। यत्सम्बन्धः साध्यतावच्छेदकसम्बन्धः। यद्धर्मः साध्यतावच्छेदकः। तत्र यदि यद्धर्मावच्छिन्नत्वाभावमात्रमित्युच्यते तदा समवायेन यो वह्न्यभावस्तस्य प्रतियोगितावच्छेदकसम्बन्धः समवायस्तेन प्रतियोग्यनधिकरणपर्व्वतादिवृत्तिः स एव तत्प्रतियोगितावच्छेदकश्च वह्नित्वमित्यव्याप्तिः स्यात्। यदि च यत्सम्बन्धावच्छिन्नत्वाभावमात्रमुच्यते तदा तादृशस्य संयोगेन घटाभावस्य प्रतियोगितायां संयोगसम्बन्धावच्छिन्नत्वसत्त्वादव्याप्तिः स्यादत उभयमुपात्तं। इत्थञ्च कालो घटवान् कालपरिमाणादित्यादौ संयोगसम्बन्धेन यो घटाभावस्तत्प्रतियोगिनो घटस्यानधिकरणे महाकाले वर्त्तमानः स एव संयोगेन घटाभावस्तस्य प्रतियोगितायां कालिकसम्बन्धावच्छिन्नत्वघटत्वावच्छिन्नत्वोभयाभावसत्त्वान्नाव्याप्तिः। धूमवान् वह्नेरित्यादावतिव्याप्तिवारणाय सामान्यपदमुपात्तं। ननु प्रमेयवह्निमान् धूमादित्यादौ प्रमेयवह्नित्वावच्छिन्नत्वमप्रसिद्धं। गुरुधर्म्मस्यानवच्छेदकत्वादिति चेत्। न। कम्बुग्रीवादिमान् नास्तीति प्रतीत्या कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताविषयीकरणेन गुरुधर्म्मस्याप्यवच्छेदकत्वस्वीकारादिति सङ्क्षेपः॥ ६८॥

भाषा० सिषाधयिषया शून्यसिद्धिर्यत्र न विद्यते।

---

सिद्धा० पक्षत्वमित्यत्र पक्षत्वं किं तदाह। सिषाधयिषया शून्या सिद्धिरित्यादि। सिषाधयिषाविरहविशिष्टायाः सिद्धेरभावः पक्षता तद्वान् पक्ष इत्यर्थः। सिषाधयिषामात्रं न पक्षता। विनापि सिषाधयिषां घनगर्जितेन मेघानुमानात् सिद्धौ सत्यामपि सिषाधयिषामत्त्वेऽनुमितिर्भवत्येव। अतः सिषाधयिषाविरहविशिष्टत्वं सिद्धौ विशेषणं। तथा च यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्यामपि पक्षता। यत्र च सिषाधयिषाऽस्ति तत्र सिद्धौ सत्यामसत्यामपि पक्षता। यत्र च सिद्धिरस्ति सिषाधयिषा च नास्ति तत्र न पक्षता। सिषाधयिषाविरहविशिष्टसिद्धेः सत्त्वात्॥ ननु यत्र परामर्शानन्तरं सिद्धिस्ततः सिषाधयिषा तत्र सिषाधयिषाकाले परामर्शनाशान्नानुमितिः। यत्र सिद्धिपरामर्शसिषाधयिषाः क्रमेण भवन्ति तत्र सिषाधयिषाकाले सिद्धेर्नाशात् प्रतिबन्धकाभावादेवानुमितिः। यत्र सिषाधयिषासिद्धिपरामर्शाः सन्ति तत्र परामर्शकाले सिषाधयिषैव नास्ति। एवमन्यत्रापि सिद्धिकाले परामर्शकालेन सिषाधयिषा॥ योग्यविभुविशेषगुणानां यौगपद्यनिषेधात् कथं सिषाधयिषाविरहविशिष्टत्वं सिद्धेर्विशेषणमिति चेत्। न। यत्र वह्निव्याप्यधूम-

भाषा॰ स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ।। ६९ ॥

सिद्धा॰ वान् पर्व्वतो वह्निमानित्यनुमितिः । सुखसाधनमिति प्रत्यक्षं स्मरणं वा । ततः सिषाधयिषा । तत्र पक्षतासम्पत्तये सिषाधयिषाविरहविशिष्टत्वविशेषणस्यावश्यकत्वादिति । अत्रेदं बोध्यं यादृशयादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिङ्गकानुमितिस्तादृशसिषाधयिषाविरहविशिष्टसिद्ध्यभावस्तल्लिङ्गकानुमितौ पक्षता । तेन सिद्धिपरामर्शसत्त्वेऽपि यत्किञ्चिज्ज्ञानं जायतामितीच्छायामपि नानुमितिः । वह्निव्याप्यधूमवान् पर्व्वतो वह्निमानिति प्रत्यक्षसत्त्वे प्रत्यक्षादिभिन्नं वह्निज्ञानं जायतामितीच्छायान्तु भवत्येव । एवं धूमपरामर्शसत्त्वे आलोकेन वह्निमनुमिनोमीतीच्छायामपि नानुमितिः । सिषाधयिषाविरहकाले यादृशसिद्धिसत्त्वे नानुमितिस्तादृशी सिद्धिर्विशिष्य तत्तदनुमितिप्रतिबन्धिका वक्तव्या । तेन पर्व्वतस्तेजस्वी पाषाणमयो वह्निमानिति ज्ञानसत्त्वेऽप्यनुमितेर्न विरोधः परन्तु पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेनानुमितिदर्शनात् । पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षतावच्छेदकावच्छेदेन सिद्धिरेव प्रतिबन्धिका । पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति तु सिद्धिमात्रं विरोधि । इदन्तु बोध्यं । अयं पुरुषो न वेति संशयानन्तरं यत्र पुरुषत्वव्याप्यकरादिमानयं इति ज्ञानं

भाषा॰ अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ।

सिद्धा॰ तत्रासत्यामनुमित्सायां पुरुषस्य प्रत्यक्षं भवति न त्व-
नुमितिरतोऽनुमित्साविरहविशिष्टसमानविषयकप्रत्यक्ष-
सामग्री कामिनीजिज्ञासादिवत् स्वातन्त्र्येण प्रतिब-
न्धिका । एवं परामर्शानन्तरं विनापि प्रत्यक्षेच्छां
पक्षादिप्रत्यक्षानुत्पत्तेः । प्रत्यक्षेच्छाविरहविशिष्टानु-
मितिसामग्री भिन्नविषयकप्रत्यक्षे प्रतिबन्धिका ॥ ६८ ॥

प्रसङ्गसङ्गत्या हेत्वाभासान् विभजते । अनैकान्त-
इत्यादि । तल्लक्षणन्तु यद्विषयत्वेन ज्ञानस्यानुमितिवि-
रोधित्वं तत्त्वं । तथाहि व्यभिचारादिविषयकत्वेन ज्ञा-
नस्यानुमितिविरोधित्वात् ते दोषाः । यद्विषयकत्वञ्च
यादृशविशिष्टविषयकत्वं बोध्यं । तेन वाधभ्रमस्यानुमि-
तिविरोधित्वेऽपि तत्र पर्व्वतो वह्न्यभाववानिति विशिष्ट-
स्याप्रसिद्धत्वान्न हेतुदोषः । न च वह्न्यभावव्याप्यपा-
षाणमयत्ववान् पर्व्वत इति परामर्शकाले वह्निव्याप्य-
धूमस्याभासत्वं न स्यात् तत्र वह्न्यभावव्याप्यवान् पक्ष इति
विशिष्टस्याप्रसिद्धत्वादिति वाच्यं । इष्टापत्तेः । अन्यथा
वाधभ्रमस्याप्यनित्यदोषत्वापत्तेः । तस्मात् तत्र वह्न्यभा-
वव्याप्यपाषाणमयत्ववान् इति परामर्शकाले वह्निव्याप्य-
धूमस्य साभासत्वं भ्रमादनुमितिप्रतिबन्धमात्रं । हेतुस्तु
न दुष्ट इति । इत्यञ्च साध्याभाववद्वृत्तिहेत्वादिकं दोषः
तद्वत्ता च हेतौ येन केनापि सम्बन्धेनेति नव्याः । परे तु

भाषा० कालात्ययोपदिष्टश्च हेत्वाभासास्तु पञ्चधा॥ ७०॥
आद्यः साधारणस्तु स्यात् स्यादसाधारणो मतः।

सिद्धा० यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तद्वत्त्वं हेत्वाभासत्वं सत्प्रतिपक्षे विरोधिव्याप्त्यादिकमेव तथा तद्वत्त्वं हेतोर्ज्ञानरूपसम्बन्धेन॥ न चैवं वह्निमान् धूमादित्यादौ बाधभ्रमे पक्षे साध्याभावविषयकत्वेनानुमितिविरोधित्वाज्ज्ञानरूपसम्बन्धेन तद्वत्त्वस्यापि सत्त्वात् सद्धेतोरपि बाधितत्वापत्तिरिति वाच्यं। तत्र ज्ञानस्य सम्बन्धत्वाकल्पनात्। अत्र सत्प्रतिपक्षित इति व्यवहारेण तत्कल्पनात्। तत्र बाधितव्यवहाराभावादित्याहुः। अनुमितिविरोधित्वञ्च अनुमितितत्कारणान्यतरविरोधित्वं। तेन एकहेतौ व्यभिचारपक्षे हेत्वन्तरेणानुमित्युत्पत्तेस्तदभावाद्यनवगाहित्वाच्च व्यभिचारज्ञानस्यानुमितिविरोधित्वाभावेऽपि न क्षतिरिति सङ्क्षेपः॥ यादृशपक्षसाध्यहेतौ यावन्तो दोषास्तावदन्यान्यत्वं तत्र हेत्वाभासत्वं। पञ्चकथनन्तु तत्सम्भवस्थलाभिप्रायेण। एवं साधारणाद्यन्यतमत्वं अनैकान्तिकत्वं॥ ७०॥

आद्यः साधारण इत्यादि। साधारणः साध्यवदन्यवृत्तिर्हेतुः। तेन च व्याप्तिग्रहप्रतिबन्धः क्रियते। असाधारणः साध्यासमानाधिकरणो हेतुः। तेन साध्यसामानाधिकरण्यग्रहः प्रतिबध्यते। यथा शब्दो नित्यः शब्दत्वादित्यादौ चासाधारणं। शब्दोऽनित्यः शब्दत्वा-

भाषा० तथैवानुपसंहारी त्रिधानैकान्तिको भवेत् ॥ ७१ ॥

सिद्धा० दित्यादौ असाधारणभ्रमः । अन्ये तु सपक्षावृत्तिरसाधारणः । सपक्षश्च निश्चितसाध्यवान् । इत्थञ्च शब्दोऽनित्यः शब्दत्वादित्यादौ पक्षे यदा साध्यनिश्चयस्तदा नासाधारण्यं तत्र हेतुनिश्चयादिति वदन्ति ॥ अनुपसंहारी च अत्यन्ताभावाप्रतियोगिसाध्यकादिः । तेन च व्यतिरेकव्याप्तिग्रहप्रतिबन्धः क्रियते ॥ विरुद्धस्तु साध्यव्यापकीभूताभावप्रतियोगी । अयञ्च साध्याभावग्रहसामग्रीत्वेन प्रतिबन्धकः ॥ सत्प्रतिपक्षे तु प्रतिहेतुसाध्याभावसाधकः । अत्र तु हेतुरेवेति विशेषः । साध्याभावसाधक एव साध्यसाधकत्वेन उपन्यस्त इत्यशक्तिविशेषोपस्थापकत्वाच्च विशेषः ॥ सत्प्रतिपक्षः साध्याभावव्याप्यवान् पक्षः । अगृहीताप्रामाण्यकसाध्यव्याप्यवत्त्वेनोपस्थितिकालीनसाध्याभावव्याप्यवत्त्वेनोपस्थितिविषयस्तथा इत्यन्ये । अत्र च परस्पराभावव्याप्यवत्ताज्ञानात् परस्परानुमितिप्रतिबन्धः फलं ॥ अत्र केचित् यथा घटाभावव्याप्यवत्ताज्ञाने विद्यमानेऽपि घटचक्षुःसंयोगे सति घटवत्ताज्ञानं जायते । यथा च सत्यपि पीतत्वाभावव्याप्यशङ्खत्ववत्ताज्ञाने पित्तादिदोषे पीतः शङ्ख इति धीर्जायते एवं कोटिद्वयव्याप्यवत्तादर्शने कोटिद्वयप्रत्यक्षरूपः संशयो भवति तथा सत्प्रतिपक्षस्थले संशयरूपानुमितिर्भवत्येव यत्र । नैककोटिव्याप्यदर्शनं

सिद्धा॰ तत्राधिकबलतया द्वितीयकोटिभानप्रतिबन्धान्न संशयः। फलबलेन चाधिकसमबलभावः कल्प्यत इति वदन्ति। तन्न। तदभावव्याप्यवत्ताज्ञाने सति तदुपनीतभानविशेषशाब्दबोधादेरनुदयात्। लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रे तस्य प्रतिबन्धकता। लाघवात्। न तूपनीतभानविशेषे शाब्दबोधे च पृथक्प्रतिबन्धकता। गौरवात्। तथाच प्रतिबन्धकसत्त्वात् कथमनुमितिः। न हि लौकिकसन्निकर्षस्थले प्रत्यक्षमिव सत्प्रतिपक्षस्थले संशयानुमितिः प्रामाणिकी येनानुमितिभिन्नत्वेनापि विशेषणीयं। यत्र कोटिद्वयव्याप्यवत्ताज्ञानं तत्रोभयत्राप्रामाण्यज्ञानात् संशयो नान्यथा ऽगृहीताप्रामाण्यकस्यैव विरोधिज्ञानस्य प्रतिबन्धकत्वादिति॥

आश्रयासिद्ध्याद्यन्यतमत्वमसिद्धत्वं। आश्रयासिद्धिः पक्षे पक्षतावच्छेदकस्याभावः। यत्र च काञ्चनमयः पर्व्वतो वह्निमानिति साध्यते तत्र पर्व्वतो न काञ्चनमय इति ज्ञाने विद्यमाने काञ्चनमयपर्व्वते परामर्शप्रतिबन्धः फलं॥

स्वरूपासिद्धिस्तु पक्षे व्याप्यत्वाभिमतस्याभावः। अत्र च ह्रदो द्रव्यं धूमादित्यादौ पक्षे व्याप्यत्वाभिमतस्य हेतोरभावे ज्ञाते पक्षे साध्यव्याप्यहेतुमत्ताज्ञानरूपपरामर्शप्रतिबन्धः फलं॥

सिद्धा॰ साध्याप्रसिद्धिरपि व्याप्यत्वासिद्धिः । सा च साध्ये साध्यतावच्छेदकाभावः। तथा च काञ्चनमयवह्निमानित्यादौ साध्ये साध्यतावच्छेदकाभावे ज्ञाते साध्यतावच्छेदकविशिष्टसाध्यव्यापकताज्ञानरूपपरामर्शप्रतिबन्धः फलं ॥

एवं हेतौ हेतुतावच्छेदकाभावः साधनाप्रसिद्धिः। यथा च काञ्चनमयधूमादित्यादौ हेतुतावच्छेदकविशिष्टहेतोर्ज्ञानाभावात् तत्तद्धेतुकव्याप्तिज्ञानादेरभावः फलं। एवं वह्निमान् नीलधूमादित्यादौ गुरुतया नीलधूमत्वं हेतुतानवच्छेदकमिति व्याप्यत्वासिद्धिरित्यपि वदन्ति ॥

वाधस्तु पक्षे साध्याभावादिः । एतस्यानुमितिप्रतिबन्धः फलं। तद्धर्म्मिकतदभावनिश्चयो लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्धर्म्मिकतज्ज्ञानमात्रे विरोधीति न तु तत्र संशयसाधारणं पक्ष साध्यसंसृष्टत्वज्ञानमनुमितिकारणं। तद्विरोधितया वाधसत्प्रतिपक्षयोर्हेत्वाभासत्वमिति युक्तं । पृथिव्यामितरभेद एतादृशानुमित्यनापत्तेः । पूर्व्वं पक्षे साध्यसंसृष्टत्वज्ञानाभावात् । अप्रसिद्धसाध्यकानुमित्यपलापापत्तेः । साध्यसंशयं विनानुमित्युत्पत्तेश्च ॥ एवं साध्याभावज्ञाने प्रमात्वज्ञानमपि न प्रतिबन्धकं। प्रमाणाभावाद् गौरवाच्च। अन्यथा सत्प्रतिपक्षादावपि तदभावव्याप्य-

भाषा० यः सपक्षे विपक्षे च भवेत् साधारणस्तु सः ।

---

सिद्धा० त्ताज्ञाने प्रमात्वविषयकत्वेन प्रतिबन्धकतापत्तेः । किन्तु भ्रमत्वज्ञानानास्कन्दिता बाधादिबुद्धेः प्रतिबन्धकता । तत्र भ्रमत्वशङ्काविघटने प्रामाण्यज्ञानं क्वचिदुपयुज्यते ॥ न च बाधस्थले पक्षे हेतुसत्त्वे व्यभिचारः पक्षे हेत्वभावे स्वरूपासिद्धिरेव दोष इति वाच्यं । बाधज्ञानव्यभिचारज्ञानादेर्भेदात् । किञ्च यदा परामर्शानन्तरं बाधबुद्धिस्तत्र व्यभिचारज्ञानादेरकिञ्चित्करत्वाद् बाधस्यानुमितिप्रतिबन्धकत्वं वाच्यं । एवं यत्रोत्पत्तिक्षणावच्छिन्ने घटादौ गन्धव्याप्यपृथिवीत्वज्ञानं तत्र बाधस्यैव प्रतिबन्धकत्वं वाच्यं ॥ न च घटे गन्धवत्त्वात् कथं बाध इति वाच्यं । पक्षतावच्छेदकदेशकालावच्छेदेनानुमितेरनुभवसिद्धत्वात् ।* इति बाधतद्व्याप्यभिन्ना ये ये हेत्वाभासास्तद्व्याप्या अपि तन्मध्य एवान्तर्भवन्ति । अन्यथा हेत्वाभासाधिक्यप्रसङ्गाद् बाधव्याप्यसत्प्रतिपक्षो भिन्न एव । स्वतन्त्रेच्छेन मुनिना पृथगुपादानात् । सत्प्रतिपक्षव्याप्यस्तु न प्रतिबन्धक इति प्रकटितोऽर्थः ॥ ७१ ॥

यः सपक्षे विपक्षे च भवेत् साधारणस्तु स इति । सपक्षविपक्षवृत्तिः साधारण इत्यर्थः । सपक्षः साध्यवान् । विपक्षः साध्याभाववान् विरुद्धवारणाय सपक्षवृत्तित्व-

---

* इति दिनकरीसम्मतः पाठः । सत्प्रतिपक्षतद्व्याप्यभिन्नो यो यो हेत्वाभासव्याप्यः स तन्मध्य एवान्तर्भवति । इत्ययं पूर्व्वपाठेऽपरीक्षकः ।

भाषा० यस्तूभयस्माद् व्यावृत्तः स चासाधरणो मतः ॥ ७२ ॥
तथैवानुपसंहारी केवलान्वयिपक्षकः ।
यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः ॥ ७३ ॥

---

सिद्धा० मुक्तं । वस्तुतो विपक्षवृत्तित्वमेव वाच्यं । विरुद्धस्य साधारणत्वेऽपि दूषकताबीजस्य भिन्नतया तस्य पार्थक्यात् ॥

यस्तूभयस्माद् व्यावृत्तः स चासाधारणो मत इति। सपक्षविपक्षव्यावृत्त इत्यर्थः। सपक्षः साध्यवत्तया निश्चितः। विपक्षः साध्यशून्यतया निश्चितः। शब्दो नित्यः शब्दत्वादित्यादौ यदा शब्देऽनित्यत्वसन्देहस्तदा सपक्षत्वं विपक्षत्वञ्च घटत्वादीनामेव तद्व्यावृत्तञ्च शब्दत्वमिति तदा तदसाधारणं। यदा तु शब्दे नित्यत्वनिश्चयस्तदा नासाधारणः। इदञ्च प्राचां मतेन। नवीनमतं पूर्व्वमुक्तं ॥७२॥

केवलान्वयिपक्षक इति। केवलान्वयिधर्मावच्छिन्नपक्षक इत्यर्थः। सर्व्वमभिधेयं प्रमेयत्वादित्यादौ सर्व्वस्यैव पक्षत्वात् सामानाधिकरण्यग्रहस्थलान्तराभावान्नानुमितिः। इदन्तु न सम्यक्। पक्षैकदेशे घटसहचारग्रहेऽपि क्षतेरभावात्। अस्तु वा सहचाराग्रहस्तावतापि अज्ञानरूपासिद्धिरेव न तु हेत्वाभासत्वं तस्य तथापि केवलान्वयिसाध्यकत्वं तत्त्वमित्युक्तं ॥ यः साध्यवतीति। एवकारेण साध्यवत्तावच्छेदेन हेत्वभावो बोधितः। तथा च साध्यव्यापकीभूताभावप्रतियोगित्वं तदर्थः ॥ ७३ ॥

भाषा० आश्रयासिद्धिराद्या स्यात् स्वरूपासिद्धिरप्यथ।
व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा ॥ ७४ ॥
पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः।
ह्रदो द्रव्यं धूमवत्त्वादत्रासिद्धिरथापरा ॥ ७५ ॥
व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत्।
विरुद्धयोः परामर्शो हेत्वोः सत्प्रतिपक्षिता ॥ ७६ ॥
साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः।
उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते ॥ ७७ ॥

---

सिद्धा० असिद्धिं विभजते। आश्रयासिद्धिरित्यादि ॥ ७४ ॥

पक्षासिद्धिरिति। आश्रयासिद्धिरित्यर्थः। नीलधूमादिक इति। नीलधूमत्वं गुरुतया न हेतुतावच्छेदकं। समानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वात्। धूमप्रागभावत्वसङ्ग्रहाय समानाधिकरणेति ॥ ७५ ॥

विरुद्धयोरिति। कपिसंयोगतदभावव्याप्यवत्त्वपरामर्शेऽपि न सत्प्रतिपक्षितत्वमत उक्तं। विरुद्धयोरिति। तथा च स्वसाध्यविरुद्धसाध्याभावव्याप्यवत्तापरामर्शकालीनसाध्यव्याप्यवत्तापरामर्शविषय इत्यर्थः ॥ ७६ ॥

साध्यशून्य इति। पक्षः पक्षतावच्छेदकविशिष्ट इत्यर्थः। तेन घटे गन्धसत्त्वेऽपि न क्षतिः। एवं मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यत्रापि बोध्यं ॥ ७७ ॥

भाषा० ग्रामीणस्य प्रथमतः पश्यतो गवयादिकं।
सादृश्यधीर्गवादीनां या स्यात् सा करणं मतं॥७८॥
वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते।
गवयादिपदानान्तु शक्तिधीरुपमाफलं॥ ७९ ॥
पदज्ञानन्तु करणं द्वारं तत्र पदार्थधीः।

---

सिद्धा० उपमितिं व्युत्पादयति। ग्रामीणस्येति। यत्रारण्यकेन केनचिद् ग्रामीणं प्रत्युक्तं गोसदृशो गवयपदवाच्य इति पश्चाच्च ग्रामीणेन क्वचिदरण्ये गवयो दृष्टः तत्र गोसादृश्यज्ञानं यत् तद् उपमितिकरणं॥ ७८॥

तदनन्तरं गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थस्मरणं जायते तदेव व्यापारः। तदनन्तरं तत्र गवयो गवयपदवाच्य इति ज्ञानं जायते तदुपमितिः। न त्वयं गवयपदवाच्य इत्युपमितिः। गवयान्तरे शक्तिग्रहाभावप्रसङ्गात्॥ ७९॥

शाब्दबोधप्रकारं दर्शयति। पदज्ञानन्त्विति। न तु ज्ञायमानं पदं करणं। पदाभावेऽपि मौनिश्लोकादौ शाब्दबोधात्। पदार्थधीरिति। पदजन्यपदार्थस्मरणं व्यापारः। अन्यथा पदज्ञानवतः प्रत्यक्षादिना पदार्थोपस्थितावपि शाब्दबोधापत्तेः। तत्रापि *वृत्त्या पदजन्यत्वं बोध्यं। अन्यथा घटादिपदात् समवायसम्बन्धेन आका-

---

* पदजन्यपदार्थोपस्थितावपीति दिनकरीटीका।

भाषा० शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥ ८० ॥

सिद्धा० स्मरणं जायते। आकाशस्यापि शाब्दबोधापत्तेः। वृत्तिः शक्तिलक्षणान्यतरः सम्बन्धः। अत्रैव शक्तिज्ञानस्योपयोगः। पूर्वं शक्तिग्रहाभावे पदज्ञानेऽपि तत्सम्बन्धेन स्मरणानुपपत्तेः। पदज्ञानस्य सम्बन्धिज्ञानविधयाऽर्थस्मारकत्वं। शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः। सा चास्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपा। आधुनिके नाम्नि शक्तिरस्त्येव। एकादशेऽहनि पिता नाम कुर्य्याद् इतीश्वरेच्छायाः सत्त्वात्। आधुनिके तु सङ्केते न शक्तिरिति सम्प्रदायः॥ नव्यास्तु ईश्वरेच्छा न शक्तिः किन्त्विच्छैव। तेन आधुनिकसङ्केतेऽपि शक्तिरस्तीति वदन्ति॥ शक्तिग्रहस्तु व्याकरणादितः। तथा हि।

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥

धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति। क्वचित् तु सति बाधके त्यज्यतेऽपि। यथा वैयाकरणैराख्यातस्य कर्त्तरि शक्तिरुच्यते। चैत्रः पचतीत्यादौ कर्त्तुश्चैत्रस्याभेदान्वयः। तच्च गौरवान्न मन्यते किन्तु कृतौ शक्तिग्रहो लाघवात्। कृतिश्चैत्रादौ प्रकारीभूय भासते॥ न च कर्त्तुरनभिधानाच्चैत्रादिपदानन्तरं तृतीया स्यादिति वाच्यं। कर्तृसङ्ख्यानभिधानस्य तत्र तन्त्रत्वात्। सङ्ख्याभिधानयोगस्य कर्मत्वाद्यनवरुद्धः

सिद्धा॰ प्रथमान्तपदोपस्थाप्यः कर्मत्वादौत्यस्य विशेषणत्वतात्पर्य्याविषयत्वमर्थः। तेन चैत्र इव गच्छतीत्यादौ न चैत्रे सङ्ख्यान्वयः। यत्र कर्मादौ न विशेषणत्वतात्पर्य्यं तद्वारणाय प्रथमान्तेति। यद्वा धात्वर्थातिरिक्ताविशेषणत्वं प्रथमदलार्थः। तेन चैत्र इव गच्छतीत्यत्र चैत्रादेर्वारणं। स्तोकं पचतीत्यादौ स्तोकादेर्वारणाय च द्वितीयदलं। तस्य द्वितीयाश्रोपस्थाप्यत्वाद्वारणं। एवं व्यापारेऽपि न शक्तिः। गौरवात्॥ रथो गच्छतीत्यादौ स्वव्यापारे आश्रयत्वे वा लक्षणा॥ जानातीत्यादौ तु आश्रयत्वे नश्यतीत्यादौ प्रतियोगित्वे निरूढलक्षणा॥ उपमानाद्यथा शक्तिग्रहस्तथोक्तं॥

एवं कोषादपि शक्तिग्रहः। सति बाधके क्वचित् त्यज्यते। यथा नीलादिपदानां नीलरूपादौ नीलादिविशिष्टे च शक्तिः कोषे व्युत्पादिता तथापि लाघवान् नीलादौ शक्तिः नीलादिविशिष्टे लक्षणेति॥

एवमाप्तवाक्यादपि। यथा कोकिलः पिकपदवाच्य इत्यादिशब्दात् पिकादिशक्तिग्रहः॥

एवं व्यवहारादपि। यथा प्रयोजकवृद्धेन घटमानयेत्युक्तं। तच्छ्रुत्वा प्रयोज्यवृद्धेन घट आनीतः। तदवधार्य्य पार्श्वस्थो बालो घटानयनरूपं कार्य्यं घटमानयेतिशब्दप्रयोज्यमवधारयति। ततश्च घटमपसारय गामानय इत्यादौ आवापोद्वापाभ्यां घटादिपदानां कार्य्यान्वित-

सिद्धा० घटादौ शक्तिं गृह्णाति। इत्यञ्च भूतले नीलो घट इत्यादिशब्दान्न शाब्दबोधः। घटादिपदानां कार्य्यान्वितघटादिबोधे सामर्थ्यावधारणात्। कार्य्यताबोधं प्रति च लिङादीनां सामर्थ्यात् तदभावान्न शाब्दबोध इत्यपि केचित्। तन्न। प्रथमतः कार्य्यान्वितघटादौ शक्त्यवधारणेऽपि लाघवेन पश्चात् तस्य परित्यागौचित्यात्। अत एव चैत्र पुत्रस्ते जातः कन्या ते गर्भिणी जाता इत्यादौ मुखप्रसादमुखमालिन्याभ्यां सुखदुःखेऽनुमाय तत्कारणत्वेन परिशेषाच्छाब्दबोधं निर्णीय तद्धेतुतया तं शब्दमवधारयति। तथा च व्यभिचारात् कार्य्यान्विते न शक्तिः। न च तत्र ते पश्येत्यादिशब्दान्तरमध्याहार्य्यं। मानाभावात्। चैत्र पुत्रस्ते जातो मृतश्चेत्यादौ तदभावाच्च। इत्यञ्च लाघवादन्वितघटेऽपि शक्तिं त्यक्त्वा घटपदस्य घटमात्रे शक्तिमवधारयति॥

एवं वाक्यशेषादपि शक्तिग्रहः। यथा यवमयश्चरुर्भवतीत्यत्र यवपदस्य दीर्घशूकविशिष्टे आर्य्याणां प्रयोगः कङ्गौ च म्लेच्छानां। तत्र हि यथाऽन्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति॥

वसन्ते सर्व्वसस्यानां जायते पत्रशातनं।

मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः॥

इति वाक्यशेषाद् दीर्घशूके शक्तिर्निर्णीयते। कङ्गौ तु शक्तिभ्रमात् प्रयोगः। नानाशक्तिकल्पने गौरवात्।

सिद्धा॰ हरिपदादौ तु विनिगमकाभावान्नानाशक्तिकल्पनं ॥

एवं विवरणादपि शक्तिग्रहः। विवरणन्तु तत्समानार्थ-पदान्तरेण तदर्थकथनं। यथा घटोऽस्तीत्यस्य कलशोऽस्तीत्यनेन विवरणाद् घटपदस्य कलशे शक्तिग्रहः। एवं पचतीत्यस्य पाकं करोतीत्यनेन विवरणादाख्यातस्य यत्नार्थकत्वं कल्प्यते ॥

एवं प्रसिद्धपदसान्निध्यादपि शक्तिग्रहः। यथा इह सहकारतरौ मधुरं पिको रौतीत्यादौ पिकपदस्य शक्तिग्रह इति ॥

तत्र जातावेव शक्तिर्न तु व्यक्तौ व्यभिचारादानन्त्याच्च। व्यक्तिं विना च जातिभानस्यासम्भवाद्व्यक्तेरपि भानमिति केचित्। तन्न। शक्तिं विना व्यक्तिभानानुपपत्तेः। न च व्यक्तौ लक्षणा। अनुपपत्तिप्रतिसन्धानं विनापि व्यक्तिबोधात्। न च व्यक्तिशक्तावानन्त्यं। सकलव्यक्तावेकस्या एव शक्तेः स्वीकारात्। न चाननुगमः। गोत्वादेरेवानुगमकत्वात् ॥ किञ्च गौः शक्येति शक्तिग्रहो यदि तदा व्यक्तौ शक्तिः। यदि तु गोत्वं शक्यमिति शक्तिग्रहस्तदा गोत्वप्रकारकपदार्थस्मरणं शाब्दबोधश्च न स्यात्। समानप्रकारत्वेन शक्तिज्ञानस्य पदार्थस्मरणं शाब्दबोधं प्रति च हेतुत्वात् ॥ किञ्च गोत्वे यदि शक्तिस्तदा गोत्वत्वं शक्यतावच्छेदकं वाच्यं। गोत्वत्वन्तु गवेतरासमवेतत्वे सति सकलगोसमवेतत्वं। तथा च

सिद्धा० गोत्वव्यक्तीनां शक्यतावच्छेदकेऽनुप्रवेशात् तत्रैव गौरवं। तस्मात् तत्तज्जात्याकृतिविशिष्टतत्तद्व्यक्तिबोधानुपपत्त्या कल्प्यमाना शक्तिर्जात्याकृतिविशिष्टव्यक्तौ विश्राम्यतीति॥

शक्तं पदन्तु क्वचिद्यौगिकं क्वचिद्रूढं क्वचिद्योगरूढं क्वचिद्यौगिकरूढं। यत्रावयवार्थ एव बुध्यते तद्यौगिकं। यथा पाचकादिपदं॥

यत्रावयवशक्तिनैरपेक्षेण समुदायशक्तिमात्रेण बुध्यते तद्रूढं। यथा गोपदघटादिपदं।

यत्र तु अवयवशक्तिविषये समुदायशक्तिरप्यस्ति तद्योगरूढं। यथा पङ्कजादिपदं। तथा हि पङ्कजपदमवयवशक्त्या पङ्कजनिकर्तृरूपमर्थं बोधयति। समुदायशक्त्या च पद्मत्वेन रूपेण पद्मं बोधयति॥ न च केवलावयवशक्त्या कुमुदे प्रयोगः स्यादिति वाच्यं। रूढिज्ञानस्य केवलयौगिकार्थज्ञानप्रतिबन्धकत्वादिति प्राञ्चः॥

वस्तुतस्तु समुदायशक्त्योपस्थितपद्मेऽवयवार्थपङ्कजनिकर्तुरन्वयो भवति। सान्निध्यात्॥ यत्र रूढ्यर्थस्य बाधः प्रतिसन्धीयते तत्र लक्षणया कुमुदादेर्बोधः। यत्र तु कुमुदत्वेन रूपेण बोधे न तात्पर्य्यज्ञानं पद्मत्वस्य च बाधस्तत्रावयवशक्तिमात्रेण निर्व्वाह इत्यप्याहुः॥

यत्र तु स्थलपद्मादाववयवार्थबाधस्तत्र समुदायशक्त्या च पद्मत्वेन रूपेण बोधः। यदि तु स्थलपङ्कजं विजातीयमेव तदा लक्षणैव॥

भाषा॰ लक्षणा शक्यसम्बन्धस्तात्पर्य्यानुपपत्तितः।

सिद्धा॰ यत्रावयवार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधस्तद्यौगिकरूढं। यथोद्भिदादिपदं। तत्र हि ऊर्द्ध्वभेदनकर्त्ता तरुगुल्मादिरपि बुध्यते यागविशेषोऽपीति॥ ८०॥

लक्षणा शक्यसम्बन्ध इत्यादि। गङ्गायां घोष इत्यादौ गङ्गापदस्य शक्यार्थे प्रवाहरूपे घोषस्यान्वयानुपपत्तिस्तात्पर्य्यानुपपत्तिर्वा यत्र प्रतिसन्धीयते तत्र लक्षणया तीरस्य बोधः। सा च शक्यसम्बन्धः। तथा हि प्रवाहरूपशक्यार्थसम्बन्धस्य तीरे गृहीतत्वात् तीरस्य स्मरणं। ततः शाब्दबोधः। परन्तु यद्यन्वयानुपपत्तिर्लक्षणाबीजं स्यात्तदा यष्टीः प्रवेशयेत्यत्र लक्षणा न स्यात्। यष्टिषु प्रवेशान्वयस्यानुपपत्तेरभावात्। तेन यष्टिप्रवेशे भोजनतात्पर्य्यानुपपत्त्या यष्टिधरे लक्षणा। एवं काकेभ्यो दधि रक्ष्यतामित्यादौ काकपदस्य दध्युपघातके लक्षणा। सर्व्वतो दधिरक्षायास्तात्पर्य्यविषयत्वात्॥ एवं छत्रिणो यान्तीत्यादौ छत्रिपदस्यैकसार्थवाहित्वेन लक्षणा। इयमेवाजहत्स्वार्था लक्षणेत्युच्यते। एकसार्थवाहित्वेन रूपेण छत्रितदन्ययोर्बोधात्॥ यदि त्वानुपपत्तिर्लक्षणाबीजं स्यात् तदा क्वचिद्गङ्गापदस्य तीरे क्वचिद्घोषपदस्य मत्स्यादौ लक्षणेति नियमो न स्यात्। इदन्तु बोध्यं शक्यार्थसम्बन्धो यदि तीरत्वेन रूपेण गृहीतस्तदा तीरत्वेन तीरबोधः। यदि तु गङ्गातीर-

सि॰मु॰ तेन रूपेण गृहीतस्तदा तेनैव रूपेण स्मरणं। अत एव लक्ष्यतावच्छेदके न लक्षणा। तत्प्रकारकबोधस्य तच लक्षणां विनाप्युपपत्तेः। परन्तु एवंक्रमेण शक्यतावच्छेदकेऽपि शक्तिर्न स्यात्। तत्प्रकारकशब्दार्थस्मरणं प्रति तत्पदस्य सामर्थ्यमित्यस्य सुवचत्वादिति विभावनीयं॥

यत्र तु शक्यार्थस्य स्वाश्रयपदवाच्यत्वरूपा लक्षणा सा लक्षितलक्षणेत्युच्यते। यथा द्विरेफादिपदे रेफद्वयसम्बन्धो भ्रमरपदे ज्ञायते। भ्रमरपदस्य च सम्बन्धो भ्रमरे ज्ञायते। तत्र लक्षितलक्षणा। किन्तु लाक्षणिकं पदं नानुभावकं। लाक्षणिकार्थस्य शाब्दबोधे तु पदान्तरं कारणं। शक्तिलक्षणान्यतरसम्बन्धेनेतरपदार्थान्वितस्वशक्यार्थशाब्दबोधं प्रति पदानां सामर्थ्यावधारणादिति प्राञ्चः॥ नवीनास्तु तदप्यनुभावकमेव। पदार्थोपस्थितिस्तु द्वारं। अन्यथा तुल्ययुक्त्या शक्तस्यापि पदस्याननुभावकत्वापत्तेरित्याहुः। *वाक्ये तु शक्तेरभावाच्छक्यसम्बन्धरूपा लक्षणाऽपि नास्ति। यत्र गभीरायां नद्यां घोष इत्युक्तं तत्र नदीपदस्य नदीतीरे लक्षणा। गभीरापदार्थस्य नद्या सहाभेदेनान्वयः। क्वचिदेकदेशान्वयस्य स्वीकृतत्वात्। यदि तत्रैकदेशान्वयोऽपि न स्वीक्रियते तदा नदीपदस्य गभीरनदीतीरे लक्षणा गभीरापदं तात्पर्य्यग्राहकं॥

---

* नवीनमतोल्लेखनं विद्वत्सम्मततयाऽस्माभिरपूर्व्वेनपत्रादर्शं।

सिद्धा॰ सक्तूश्रीशावयोर्वं। तत्र हि चित्रगुपदादौ यद्येक-
देशान्वयः स्वीक्रियते तदा गोपदस्य गोस्वामिनि
लक्षणा। गवि चित्राभेदान्वयः। यदि त्वेकदेशान्वयो
न स्वीक्रियते तदा गोपदस्य चित्रगोस्वामिनि लक्षणा।
चित्रापदं तात्पर्य्यग्राहकं॥

एवमारूढवानरो वृक्ष इत्यत्र वानरपदे वानरा-
रोहणकर्म्मणि लक्षणा। आरूढपदञ्च तात्पर्य्यग्राहकं।
एवमन्यत्रापि॥

तत्पुरुषे तु पूर्व्वपदे लक्षणा। तथाहि राजपुरुषा-
दिपदे राजपदार्थेन पुरुषादिपदार्थस्य साक्षात्सम्बन्धा-
न्वयः। निपातातिरिक्तनामार्थयोर्भेदेनान्वयबोधस्याव्यु-
त्पन्नत्वात्। अन्यथा राजा पुरुष इत्यत्रापि तथान्वय-
बोधः स्यात्। पटो न घट इत्यादौ घटपटाभ्यां नञः
साक्षादेवान्वयात् निपातातिरिक्तेति। नीलो घट
इत्यादौ नामार्थयोरभेदसम्बन्धेनान्वयाद्भेदेनेति॥ न
च राजपुरुष इत्यादौ लुप्तविभक्तेः स्मरणं कल्प्यमिति
वाच्यं। अस्मृतविभक्तेरपि ततो बोधोदयात्। तस्माद्
राजपदादौ राजसम्बन्धिनि लक्षणा। तस्य च पुरुषेण
सहाभेदान्वयः॥

द्वन्द्वे तु धवखदिरौ छिन्धीत्यादौ धवः खदिरश्च
विभक्त्यर्थद्वित्वप्रकारेण बुध्यते तत्र लक्षणा॥ न च
साहित्ये लक्षणेति वाच्यं। साहित्यशून्ययोरपि द्वन्द्व-

सिद्धा॰ दर्शनात्॥ न च एकक्रियान्वयित्वरूपं साहित्यमस्तीति वाच्यं। क्रियाभेदे धवखदिरौ छिन्धीत्यादिदर्शनात्। साहित्यस्याननुभवाच्च। तस्मात् साहित्यादिकं नार्थः। अत एव राजपुरोहितौ सायुज्यकामौ यजेयातामित्यत्र लक्षणाभावाद् द्वन्द्व आश्रीयते। किन्तु वास्तवो भेदो यत्र तत्र द्वन्द्वः। न च नीलघटयोरभेद इत्यादौ कथमिति वाच्यं। तत्र नीलपदस्य नीलत्वं घटपदस्य घटत्वमर्थः। अभेद इत्यस्याश्रयाभेद इत्यर्थात्॥

समाहारद्वन्द्वे तु यदि समाहारोऽप्यनुभूयत इत्युच्यते तदाऽहिनकुलमित्यादौ परपदेऽहिनकुलसमाहारे लक्षणा। पूर्व्वपदं तात्पर्य्यग्राहकं॥ न च भेरीमृदङ्गं वादयेत्यत्र कथं समाहारस्यान्वयोऽपेक्षाबुद्धिविशेषरूपस्य वादनासम्भवादिति वाच्यं। स्वाश्रयवृत्तित्वरूपसम्बन्धेन तदन्वयात्। एवं पञ्चपूलीत्यादावपि॥ परे तु अहिनकुलमित्यादौ अहिनकुलस्य बुध्यते। प्रत्येकमेकत्वान्वयः समाहारसञ्ज्ञा च। यच्चैकत्वं नपुंसकत्वं प्राणितूर्य्येत्यादिसूत्रेणोक्तं तच्चैव। अन्यत्रैकवचनमसाध्विति वदन्ति॥

कर्म्मधारयस्थले तु नीलोत्पलमित्यादौ अभेदसम्बन्धेन नीलपदार्थ उत्पलपदार्थे प्रकारः। न च तत्र लक्षणा। अत एव निषादस्थपतिं याजयेदित्यत्र न

भाषा० आसत्तियोग्यताकाङ्क्षातात्पर्य्यज्ञानमिष्यते ॥ ८१ ॥
कारणं सन्निधानन्तु पदस्यासत्तिरुच्यते ।

---

सिद्धा० तत्पुरुषः । लक्षणापत्तेः । किन्तु कर्मधारयो लक्षणाभावात् ॥ न च निषादस्य सङ्करजातिविशेषस्य वेदानधिकाराद् याजनासम्भव इति वाच्यं। निषादस्य विद्याप्रयुक्तेस्तत एव कल्पनात्। लाघवेन मुख्यार्थस्यान्वये तदनुपपत्त्या कल्पनायाः फलमुखगौरवतयाऽदोषत्वादिति ॥ उपकुम्भं अर्द्धपिप्पलीत्यादौ परपदे तत्सम्बन्धिनि लक्षणा पूर्व्वपदार्थप्रधानतया चान्वयबोध इति । इत्यञ्च समासे न क्वापि शक्तिः । पदशक्त्यैव निर्व्वाहादिति ॥ पितरौ श्वशुरौ इत्यादौ पितृपदे जनकदम्पत्योः श्वशुरपदे स्त्रीजनकदम्पत्योर्लक्षणा । एवमन्यत्रापि । घटा इत्यादौ न लक्षणा । घटत्वेन रूपेण नानाघटस्थितिसम्भवात् ॥

आसत्तियोग्यतेत्यादि । आसत्तिज्ञानं योग्यताज्ञानं आकाङ्क्षाज्ञानं तात्पर्य्यज्ञानञ्च शाब्दबोधे कारणं ॥ ८१ ॥

तत्रासत्तिपदार्थमाह । सन्निधानन्त्विति । यत्पदार्थस्य यत्पदार्थेनान्वयोऽपेक्षितस्तयोरव्यवधानेनोपस्थितिः कारणं। तेन गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ न शाब्दबोधः। नीलो घटो द्रव्यं पट इत्या

सिद्धा॰ द्वावासत्तिभ्रमाच्छाब्दबोधः* । आसत्तिभ्रमाच्छाब्दभ्रमाभावेऽपि न क्षतिः ॥ ननु यत्र छत्री कुण्डली वाससी देवदत्त इत्युक्तं तत्रोत्तरपदस्मरणेन पूर्व्वपदस्मरणस्य नाशात् । अव्यवधाने तु उत्तरपदस्मरणासम्भव इति चेत् । न । प्रत्येकपदसंस्कारैश्चरमं तावद्विषयकस्मरणस्याव्यवधानेनोत्पत्तेः । नानासन्निकर्षैरेकप्रत्यक्षस्येव नानासंस्कारैरेकस्मरणोत्पत्तेरपि सम्भवात् । तावत्पदसंस्कारसहितचरमवर्णज्ञानस्योद्बोधकत्वात् । कथमन्यथा नानावर्णकपदस्मरणं । परन्तु तावत्पदार्थानां स्मरणादेकदैव खले कपोतन्यायात् तावत्पदार्थानां क्रियाकर्म्मभावेनान्वयबोधरूपः शाब्दबोधो भवतीति केचित् ॥ अपरे तु ।

यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते ॥

तथा च खण्डवाक्यार्थबोधानन्तरं तथैव पदार्थस्तथा महावाक्यार्थबोध इत्यप्याहुः । एतेन तावद्वर्णाभिव्यङ्ग्यः पदस्फोटोऽपि निरस्तः । तत्तद्वर्णसंस्कारसहितचरमवर्णोपलम्भेन तद्व्यञ्जकेनैवोपपत्तेरिति ॥ इदन्तु बोध्यं । यत्र द्वारमित्युक्तं तत्र पिधेहीति पदस्य ज्ञानादेव बोधः । न तु पिधानादिरूपार्थज्ञानात् । पदजन्यपदार्थोपस्थितेस्तच्छाब्दबोधे हेतुत्वात् । किञ्च

---

* मोक्ष इत्यादिकपाठो दिनकरीयसम्मततया विद्वद्भिः समादृतः ॥

N

भाषा० पदार्थे तत्र तद्वत्ता योग्यता परिकीर्त्तिता ॥ ८२ ॥
यत्पदेन विना यस्यानन्वयबोधकता भवेत् ।

सिद्धा० क्रियाकर्म्मपदानां तेन तेनैव सह साकाङ्क्षत्वं । तेन क्रियापदं विना कथं शाब्दबोधः स्यात् । तथा पुष्पेभ्य इत्यादौ स्पृहयतीतिपदाध्याहारं विना चतुर्थ्यनुपपत्तेः पदाध्याहार आवश्यकः ॥

योग्यतां निर्व्वक्ति । पदार्थ इत्यादिना । एकपदार्थेऽपरपदार्थसम्बन्धो योग्यतेत्यर्थः । तज्ज्ञानाभावाच्च वह्निना सिञ्चतीत्यादौ न शाब्दबोधः ॥ नन्वेतस्या योग्यताया ज्ञानं शाब्दबोधात् प्राक् सर्व्वत्र न सम्भवति वाक्यार्थस्यापूर्व्वत्वादिति चेत् । न । तत्तत्पदार्थस्मरणे सति क्वचित् संशयरूपस्य क्वचिन्निश्चयरूपस्यापि योग्यताया ज्ञानस्य सम्भवात् ॥

नव्यास्तु योग्यताया ज्ञानं न शाब्दज्ञाने कारणं । वह्निना सिञ्चतीत्यादौ सेके वह्निकरणत्वाभावरूपाऽयोग्यतानिश्चयेन प्रतिबन्धान् न शाब्दबोधः । तदभावनिश्चयस्य लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रे प्रतिबन्धकत्वात् शाब्दबोधं प्रति प्रतिबन्धकत्वं सिद्धं । योग्यताज्ञानविलम्बाच्च शाब्दबोधविलम्बोऽसिद्ध इति वदन्ति ॥ ८९ ॥

आकाङ्क्षां निर्व्वक्ति । यत्पदेनेत्यादि । येन पदेन विना यत्पदस्यान्वयाननुभावकत्वं तेन सह तस्याका-

भाषा॰ आकाङ्क्षा, वक्तुरिच्छा तु तात्पर्य्यं परिकीर्त्तितं ॥८३॥

सिद्धा॰ ङ्क्षा इत्यर्थः। क्रियापदं विना कारकपदं नान्वयबोधं जनयतीति तेन तस्याकाङ्क्षा। वस्तुतस्तु क्रियाकारकपदानां सन्निधानमासत्त्या चरितार्थं। परन्तु घटकर्मताबोधं प्रति घटपदोत्तरद्वितीयाकाङ्क्षाज्ञानं कारणं। तेन घटः कर्मत्वमानयनं कृतिरित्यादौ न शाब्दबोधः। अयमेति पुत्रो राज्ञः पुरुषोऽपसार्य्यतामित्यादौ तु पुरुषेण सह राजपदस्य तात्पर्य्यग्रहाभावान् न तेन सहान्वयः॥

तात्पर्य्यं निर्व्वक्ति। वक्तुरिच्छेति। यदि तात्पर्य्यज्ञानं कारणं न स्यात् तदा सैन्धवमानयेत्यादौ क्वचिदश्वस्य क्वचिल्लवणस्य बोधो न स्यात्॥ न च तात्पर्य्यग्राहकप्रकरणादीनामेव शाब्दबोधे कारणत्वमस्त्विति वाच्यं। तेषामननुगमात्। तात्पर्य्यज्ञानजनकत्वेन तेषामनुगमे तु तात्पर्य्यज्ञानमेव लाघवात् कारणमस्तु। इत्यञ्च वेदस्थलेऽपि तात्पर्य्यज्ञानार्थमीश्वरः कल्प्यते॥ न च तत्राध्यापकतात्पर्य्यज्ञानं कारणमिति वाच्यं। सर्गादावध्यापकाभावात्॥ न च प्रलय एव नास्तीति कुतः सर्गादिरिति वाच्यं। प्रलयस्यागमप्रतिपाद्यत्वात्। इत्यञ्च शुकवाक्येऽपि ईश्वरीयतात्पर्य्यज्ञानं कारणं। विसम्वादिशुकवाक्ये तु शिक्षयितुरेव तात्पर्य्यस्य ज्ञानं कारणं॥ अन्ये तु नानार्थादौ क्वचिदेव तात्पर्य्यज्ञानं

सिद्धा० कारणं। तथाच शुकवाक्ये विनैव तात्पर्य्यज्ञानं शाब्द-बोधः। वेदे तु अनादिमीमांसापरिशोधिततर्कैरर्थाव-धारणमित्याहुः॥

पूर्व्वमनुभवस्मरणभेदाद्बुद्धेर्द्वैविध्यमुक्तं। तत्रानुभव-प्रकारा दर्शिताः सुगमतया स्मरणं न दर्शितं। तत्र हि पूर्व्वानुभवः कारणं॥ अत्र केचिद् अनुभव-त्वेन न कारणत्वं किन्तु ज्ञानत्वेन। अन्यथा स्मरणा-नन्तरं स्मरणं न स्यात्। समानप्रकारकस्मरणेन पूर्व्व-संस्कारस्य विनष्टत्वात्। मन्मते तु तेनैव स्मरणेन सं-स्कारान्तरद्वारा स्मरणान्तरं जन्यत इत्याहुस्तन्न। यत्र समूहालम्बनोत्तरं घटपटादीनां क्रमेण स्मरणमजनिष्ट सकलविषयकस्मरणन्तु नाभूत् तत्र फलस्य संस्कारना-शकत्वाभावात् कालस्य रोगस्य चरमफलस्य वा सं-स्कारनाशकत्वं वाच्यं। तथा च न क्रमिकस्मरणानुप-पत्तिः। न च पुनः पुनः स्मरणाद् दृढतरसंस्कारानुप-पत्तिः। झटित्युद्बोधकसमवधानस्य दार्ढ्यपदार्थत्वात्॥ न च विनिगमनाविरहाद्रैव ज्ञानत्वेनापि जनकत्वं स्या-दिति वाच्यं। विशेषधर्म्मेणाव्यभिचाराज् ज्ञाने सामा-न्यधर्म्मेणान्यथासिद्धत्वात्। कथमन्यथा दण्डस्य भ्रमि-द्वारा द्रव्यत्वेन रूपेण न कारणत्वं॥ न चान्तरालिकस्म-रणानां संस्कारनाशकत्वसंशयाद् व्यभिचारसंशय इति वाच्यं। अनन्तसंस्कारतन्नाशकल्पनापत्त्या चरमस्मरण-

भाषा० साक्षात्कारे सुखादीनां करणं मन उच्यते ।
अयौगपद्याज् ज्ञानानां तस्याणुत्वमिहेष्यते ॥ ८४ ॥

---

सिद्धा० सैव संस्कारनाशकल्पनेन व्यभिचारसंशयाभावात् ॥ ८३ ॥

इदानीं क्रमप्राप्तं मनो निरूपयति । साक्षात्कार इति । एतेन मनसि प्रमाणं दर्शितं । तथाहि सुखसाक्षात्कारः सकरणको जन्यसाक्षात्कारत्वाच्चाक्षुषवद् इत्यनुमानेन करणस्य मनसः सिद्धेः ॥ न चैवं दुःखादिसाक्षात्काराणामपि करणान्तराणि स्युरिति वाच्यं । लाघवादेकस्यैव तादृशसकलसाक्षात्कारकरणतया सिद्धेः । एवं दुःखादीनामसमवायिकारणसंयोगाश्रयतया मनःसिद्धिर्बोद्धव्या ॥

मनसोऽणुत्वे प्रमाणमाह । अयौगपद्यादिति । ज्ञानानां चाक्षुषरासनादीनां यौगपद्यमेककालोत्पत्तिर्नास्तीत्यनुभवसिद्धं । तत्र नानेन्द्रियाणां सत्यपि विषयसन्निकर्षे यत्सम्बन्धादेकेन्द्रियेण ज्ञानमुत्पद्यते तदसम्बन्धादपि त्वगादिभिः परैर्ज्ञानं नोत्पद्यते । तन्मनोविभुत्वे चासन्निधानं न सम्भवतीति न विभु मनः ॥ न च तदानीमदृष्टविशेषोद्बोधविलम्बादेव तज्ज्ञानविलम्ब इति वाच्यं । तथा सति चक्षुरादीनामपि कल्पनाऽनापत्तेः ॥ न च दीर्घशष्कुलीभक्षणादौ

भाषा॰ अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः ।

---

सिद्धा॰ नानावधानभाजाञ्च कथमेकदा नानेन्द्रियज्ञानमिति वाच्यं । मनसोऽतिलाघवात् त्वरया नानेन्द्रियसम्बन्धात् नानाज्ञानोत्पत्तेः । उत्पलशतपत्रभेदादिवत् । यौगपद्यप्रत्ययस्य तु भ्रान्तत्वात् ॥ न च मनसः सङ्कोचविकाशशालित्वादुभयोपपत्तिरस्त्विति वाच्यं । नानावयवतन्नाशादिकल्पने गौरवात् । लाघवात् निरवयवस्यैव मनसः कल्पनादिति सङ्क्षेपः ॥ इति सिद्धान्तमुक्तावल्यां द्रव्यपदार्थव्याख्या समाप्ता ॥ ८४ ॥ * ॥

द्रव्यं निरूप्य गुणं निरूपयति । अथेत्यादिना । गुणत्वजातौ किं मानमिति चेत् । इदं । द्रव्यकर्म्मभिन्नसामान्यवति या कारणता सा किञ्चिद्धर्म्मावच्छिन्ना । निरवच्छिन्नकारणताया असम्भवात् । न हि रूपत्वादिकं सत्ता वा तत्रावच्छेदिका । न्यूनातिरिक्तदेशवृत्तित्वात् । अतस्तदुर्व्विंशत्यनुगतं वाच्यं तदेव गुणत्वमिति सिद्धं ॥ द्रव्याश्रिता इति । यद्यपि द्रव्याश्रितत्वं न लक्षणं कर्म्मादावतिव्याप्तेस्तथापि द्रव्यत्वव्यापकतावच्छेदकसत्तान्यजातिमत्त्वं तदर्थः । भवति हि गुणत्वं द्रव्यत्वव्यापकतावच्छेदकं तद्वत्ता च गुणानामिति कर्म्मत्वं द्रव्यत्वं वा न द्रव्यत्वव्यापकतावच्छेदकं । गगणादौ द्रव्यकर्म्मणोरभावात् । द्रव्यत्वत्वं सामान्यत्वादिकं न जातिरिति तद्गु-

भाषा॰ रूपं रसः स्पर्शगन्धौ परत्वमपरत्वकं ॥ ८५ ॥
द्रवो गुरुत्वं स्नेहश्च वेगो मूर्त्तगुणा अमी।
धर्म्माधर्म्मौ भावना च शब्दो बुद्ध्यादयोऽपि च ॥८६॥
एतेऽमूर्त्तगुणाः सर्व्वे विद्वद्भिः परिकीर्त्तिताः।
सङ्ख्यादिश्च विभागान्त उभयेषां गुणो मतः॥ ८७ ॥
संयोगश्च विभागश्च सङ्ख्या द्वित्वादिकास्तथा।
द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः ॥ ८८ ॥
अतः शेषा गुणाः सर्व्वे मता एकैकवृत्तयः।

---

सिद्धा॰ दायः ॥ निर्गुणा इति। यद्यपि निर्गुणत्वं कर्म्मादावपि तथापि सामान्यवत्त्वे कर्म्मान्यत्वे च सति निर्गुणत्वं बोध्यं। जात्यादीनां न सामान्यवत्त्वं कर्म्मणो न कर्म्मान्यत्वं द्रव्यस्य न निर्गुणत्वमिति तत्र नातिव्याप्तिः। निष्क्रियेति स्वरूपकथनं न तु लक्षणं। गगनादावतिव्याप्तेः ॥८५॥

मूर्त्तगुणा इति। वेगेन स्थितिस्थापकोऽप्युपलक्षणीयः। अमूर्त्तेषु न वर्त्तन्त इत्यर्थः। लक्षणन्तु तावदन्यान्यत्वं। एवमग्रेऽपि ॥ ८६ ॥

उभयेषामिति। मूर्त्तामूर्त्तगुणा इत्यर्थः ॥ ८७ ॥

अनेकाश्रिता इति। संयोगद्वित्वादीनि द्विवृत्तीनि। त्रित्वचतुष्ट्वादिकं त्रिचतुरादिवृत्तीति बोध्यं॥ ८८॥

अतः शेषा इति। रूपरसगन्धस्पर्शैकत्वपरिमाणैकपृथक्त्वपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्र-

भाषा० बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः॥८९॥
अदृष्टभावना शब्दा अमी वैशेषिका गुणाः।
सङ्ख्यादिरपरत्वान्तो द्रवः सांसिद्धिकस्तथा ॥९०॥
गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्त्तिताः।
सङ्ख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च ॥ ९१ ॥
एते तु द्वीन्द्रियग्राह्या अथ स्पर्शान्तशब्दकाः।
वाह्यैकैकेन्द्रियग्राह्या गुरुत्वादृष्टभावनाः॥ ९२ ॥
अतीन्द्रिया विभूनान्तु ये स्युर्वैशेषिका गुणाः।
अकारणगुणोत्पन्ना एते तु परिकीर्त्तिताः ॥ ९३ ॥
अपाकजास्तु स्पर्शान्ता द्रवत्वञ्च तथाविधं।
स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकं ॥ ९४ ॥

---

सिद्धा० त्वस्नेहसंस्कारादृष्टशब्दा इत्यर्थः। द्रवो द्रवत्वं॥८८॥

वैशेषिका इति। विशेषा एव वैशेषिकाः स्वार्थे ठक् विशेषगुणा इत्यर्थः॥ सङ्ख्यादिरिति। सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वानीत्यर्थः॥९०॥९१॥

द्वीन्द्रियेति। चक्षुषा त्वचाऽपि ग्रहणयोग्यत्वात्॥ वाह्येति। रूपादीनां चक्षुरादिग्राह्यत्वात्॥ ९२ ॥

विभूनामिति। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा इत्यर्थः॥ अकारणेति। कारणगुणपूर्व्वका रूपादयो वक्ष्यन्ते। बुद्ध्यादयस्तु न तादृशाः। आत्मादेः कारणाभावात्। पाकजरूपादीनां कार-

भाषा० स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः ।
संयोगश्च विभागश्च वेगश्चैते तु कर्म्मजाः ॥ ९५ ॥
स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके ।
भवेदसमवायित्वमथ वैशेषिके गुणे ॥ ९६ ॥
आत्मनः स्यान्निमित्तत्वमुष्णस्पर्शगुरुत्वयोः ।
वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा * ॥ ९७ ॥
द्विधैव कारणत्वं स्यादथ प्रादेशिको भवेत् ।

---

सिद्धा० गुणपूर्व्वकत्वाभावाद् अपाकज इत्युक्तं ॥ ९२ ॥९४ ॥ ९५ ॥

स्पर्शान्तेति । स्पर्शोऽत्रानुष्णो ग्राह्यः । एकपृथक्त्वेत्यत्र त्वप्रत्ययस्य प्रत्येकमन्वयाद् एकत्वं पृथक्त्वञ्च ग्राह्यं । पृथक्त्वपदेन चैकपृथक्त्वं विवक्षितं ॥

भवेदसमवायित्वमिति । घटादिरूपरसगन्धस्पर्शाः कपालादिरूपरसगन्धस्पर्शेभ्यो भवन्ति । एवं कपालादिपरिमाणादीनां घटादिपरिमाणाद्यसमवायिकारणत्वं ॥ एवं शब्दस्यापि द्वितीयशब्दं प्रति ॥ ९६ ॥

निमित्तत्वमिति । बुद्ध्यादीनां इच्छादिनिमित्तत्वादिति भावः ॥ ९७ ॥

द्विधैव कारणत्वमिति । असमवायिकारणत्वं निमित्तकारणत्वञ्च । तथा हि उष्णस्पर्श उष्णस्पर्शस्यासम-

---

* परापरत्वद्वित्वादिद्विपृथक्त्वादिके पुनः ॥ इत्यन्याकरेऽयं पाठः ॥

भाषा॰ वैशेषिको विभुगुणः संयोगादिद्वयं तथा ॥ ९८ ॥
चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलम्भकं ।

---

सिद्धा॰ वायी पाकजे निमित्तं। गुरुत्वं गुरुत्वपतनयोरसमवायि प्रतिघाते निमित्तं। वेगो वेगस्पन्दनयोरसमवायी अभिघाते निमित्तं। द्रवत्वं द्रवत्वस्पन्दनयोरसमवायि सङ्ग्रहे निमित्तं। भेरीदण्डयोगः शब्दे निमित्तं। भेर्याकाशसंयोगो ऽसमवायी वंशदलद्वयविभागः शब्दे निमित्तं। वंशदलाकाशविभागोऽसमवायीति। * प्रादेशिकोऽव्याप्यवृत्तिः॥ ९८ ॥

चक्षुरिति। रूपत्वजातिः प्रत्यक्षसिद्धा। रूपशब्दोल्लेखिनी प्रतीतिर्नास्तीति चेत्। मास्तु रूपशब्दप्रयोगस्तथापि नीलपीतादिष्वनुगतजातिविशेषोऽनुभवसिद्ध एव। रूपशब्दाप्रयोगेऽपि नीलो वर्णः पीतो वर्ण इति वर्णशब्दोल्लेखिनी प्रतीतिरस्त्येव। एवं नीलत्वादिकमपि प्रत्यक्षसिद्धं॥ न चैकैका एव नीलरूपादिव्यक्तय इत्येकव्यक्तिवृत्तित्वात् नीलत्वादिर्न जातिरिति वाच्यं। नीलो नष्टो रक्त उत्पन्न इत्यादिप्रतीतेर्नीलादेरुत्पादविनाशशालितया नानात्वात्। अन्यथा एकनीलनाशे जगदनीलमापद्येत॥ न च नी-

---

* न द्वित्वेति परत्वादीनां मानसमात्रे कारणत्वं न निमित्तकारणत्वमित्यर्थः। इदञ्च ज्ञानातिरिक्ताभावं प्रति बोध्यं। द्वित्वादिपदेन च विशेषो ग्राह्यः। तेन परमाणुद्वित्वादेर्द्व्यणुकादिपरिमाणहेतुत्वेऽपि न क्षतिः। इत्ययमनादृतः पाठः॥

भाषा० चक्षुषः सहकारि स्यात् शुक्लादिकमनेकधा ॥ ९९ ॥

सिद्धा० रक्तादिसमवाययोरेव विनाशोत्पादविषयकोऽसौ प्रत्यय इति वाच्यं। प्रतीत्या समवायानुल्लेखात् ॥ न च स एवायं नील इति प्रत्ययालाघवाच्चैक्यमिति वाच्यं। प्रत्ययस्य तज्जातीयविषयकत्वात् । सैवेयं गुर्ज्जरीति-वल्लाघवं प्रत्यक्षबाधितं । अन्यथा घटादीनामप्यैक्य-प्रसङ्गात् । उत्पादविनाशशब्दबुद्धेः समवायावलम्बन-त्वापत्तेरिति। एतेन रसादिकं व्याख्यातं॥ चक्षुर्ग्रा-ह्यमिति । चक्षुर्ग्राह्यविशेषगुण इत्यर्थः । एवमग्रेऽपि । द्रव्यादेरिति। उपलम्भकं उपलब्धिकारणं॥

इदमेव विवृणोति। चक्षुष इति। द्रव्यगुणकर्म्म-सामान्यानां चाक्षुषप्रत्यक्षं प्रति उद्भूतरूपं कारणं॥ शुक्लादिकमनेकधेति। तद्रूपं शुक्लनीलपीतरक्तकर्ब्बु-रादिभेदादनेकप्रकारकं भवति ॥ ननु कर्ब्बुरं कथ-मतिरिक्तरूपं भवति। इत्थं नीलपीताद्यारब्धोऽवयवी न तावन्नीरूपः। अप्रत्यक्षप्रसङ्गात्। नापि व्याप्यवृत्ति-नीलादिकमुत्पद्यते। पीतावच्छेदेनापि नीलोपलब्धि-प्रसङ्गात्। नाप्यव्याप्यवृत्तिनीलादिकमुत्पद्यते। व्याप्य-वृत्तिजातीयगुणानामव्याप्यवृत्तित्वे विरोधात्। तस्मात् नानाजातीयरूपैरवयविनि विजातीयं चित्रमारभ्यते। अत एवैकं चित्रमित्यनुभवोऽपि। नानारूपकल्पने तु गौरवात् । इत्थञ्च नीलादीनां पीताद्यारम्भे प्रति-

भाषा० जलादिपरमाणौ तन्नित्यमन्यत् सहेतुकं।
रसस्तु रसनाग्राह्यो मधुरादिरनेकधा ॥ १०० ॥

---

सिद्धा० बन्धकलकल्पनाद् अवयविनि न पीताद्युत्पत्तिः। एतेन स्पर्शो व्याख्यातः॥ रसादिकमपि नाव्याप्यवृत्तिः किन्तु नानाजातीयरसवदवयवैरारब्धेऽवयविनि रसाभावेऽपि न क्षतिः। तत्र रसनया अवयवरस एव गृह्यते। रसनेन्द्रियादीनां द्रव्यग्रहसामर्थ्याभावात्। अवयविनो नीरसत्वेऽपि क्षतेरभावात्॥ नव्यास्तु तत्राव्याप्यवृत्त्येव नानारूपं। नीलादेः पीतादिप्रतिबन्धकत्वकल्पने गौरवात्। अत एव।

लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते॥

इत्यादिशास्त्रमप्युपपद्यते। न च व्याप्याव्याप्यवृत्तिजातीययोर्द्वयोर्विरोधः। मानाभावात्। न च लाघवादेकं रूपं। अनुभवविरोधात्। अन्यथा घटादेरपि लाघवादैक्यं स्यादिति। एतेन स्पर्शादिकं व्याख्यातमिति वदन्ति॥ ९९॥

जलादीति। जलपरमाणौ तेजःपरमाणौ च रूपं नित्यं पृथिवीपरमाणुरूपन्तु न नित्यं। पाकेन रूपान्तरोत्पत्तेः। न हि घटस्य पाकानन्तरं तदवयवोऽपक्व उपलभ्यते। न हि रक्तकपालस्य कपालिका नीला-

भाषा० सहकारी रसज्ञाया नित्यतादि च पूर्व्ववत्।
घ्राणग्राह्यो भवेद्गन्धो घ्राणस्यैवोपकारकः ॥ १०१ ॥
सौरभश्चासौरभश्च स द्वेधा परिकीर्त्तितः।
स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ॥ १०२ ॥
अनुष्णाशीतशीतोष्णभेदात् स त्रिविधो मतः।
काठिन्यादिः क्षितावेव नित्यतादि च पूर्व्ववत् ॥ १०३ ॥

---

सिद्धा० वयवा भवति। एवंक्रमेण परमाणावपि पाकसिद्धिः॥ अन्यज्जलतेजःपरमाणुरूपभिन्नरूपं सहेतुकं जन्यं॥ रसं निरूपयति। रसस्त्विति॥ १०० ॥

सहकारीति। रासनज्ञाने रसः कारणमित्यर्थः॥ पूर्व्ववदिति। जलपरमाणौ रसो नित्योऽन्यः सर्व्वोऽपि रसोऽनित्य इत्यर्थः॥ गन्धं निरूपयति। घ्राणग्राह्य इति। उपकारको घ्राणजन्यज्ञाने कारणमित्यर्थः। अन्यो गन्धः सर्व्वोऽनित्य एव॥ १०१ ॥

स्पर्शं निरूपयति। स्पर्श इति। उपकारक इति स्पार्शनप्रत्यक्षे स्पर्शः कारणमित्यर्थः॥ १०२ ॥

अनुष्णाशीत इति। पृथिव्या वायोश्च स्पर्शोऽनुष्णाशीतः। जलस्य शीतः। तेजस उष्णः॥ काठिन्येति। कठिनसुकुमारस्पर्शः पृथिव्या एवेत्यर्थः। कठिनत्वादिकन्तु न संयोगनिष्ठो जातिविशेषः। चक्षुर्ग्राह्यतापत्तेः॥ पूर्व्ववदिति। जलतेजोवायुपरमाणु-

भाषा० एतेषां पाकजत्वन्तु क्षितौ नान्यत्र कुत्रचित्।

सिद्धा० स्पर्शो नित्यास्त्वन्निस्पर्शास्त्वनित्या इत्यर्थः॥ १०३॥

एतेषामिति॥ एतेषां रूपरसगन्धस्पर्शानां। नान्यत्रेति। पृथिव्यां हि रूपरसगन्धस्पर्शपरावृत्तिः पाकसंयोगादुपलभ्यते। न हि शतधापि ध्मायमाने जलादौ रूपादिकं परावर्त्तते। नीरे सौरभमौष्ण्यञ्च अन्वयव्यतिरेकाभ्यामौपाधिकमेवेति निर्णीयते। पवनपृथिव्योः शीतस्पर्शादिवत्॥ तत्रापि पृथिवीष्वपि मध्ये परमाणावेवं पाक इति वैशेषिका वदन्ति। तेषामयमाशयः। अवयविनाऽवष्टब्धेष्ववयवेषु पाको न सम्भवति। परन्तु वह्निसंयोगेनावयविषु विनष्टेषु स्वतन्त्रेषु परमाणुषु पाकः। पुनश्च पक्वपरमाणुसंयोगाद् द्व्यणुकादिक्रमेण पुनर्महावयविपर्य्यन्तमुत्पत्तिः। तेजसामतिशयितवेगवशात् पूर्व्वव्यूहनाशो झटिति व्यूहान्तरोत्पत्तिश्चेति॥ अथ द्व्यणुकादिविनाशमारभ्य कतिभिः क्षणैः पुनरुत्पत्त्या रूपादिमद्भवतीति शिष्यबुद्धिवैशद्याय प्रक्रिया तत्र स्यात्॥ संयोगविभागयोरनपेक्षकारणं कर्म्म इति वैशेषिकसूत्रं। स्वोत्तरवृत्तिभावान्तरानपेक्षत्वं तस्यार्थः। अन्यथा कर्म्मणोऽप्युत्तरसंयोगजनने पूर्व्वसंयोगनाशापेक्षणादव्याप्तिः स्यादिति॥ तत्र विभागजविभागानङ्गीकारे नवक्षणा तदङ्गीकारेऽपि विभागः किञ्चित्सापेक्षो विभागं जनयेत् निरपेक्षस्य

भाषा० तत्रापि परमाणौ स्यात् पाको वैशेषिके नये ॥ १०४ ॥

सिद्धा० तत्त्वे कर्म्मत्वं स्यात्* । तत्र यदि द्रव्यारम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागजविभागः स्यात् तदा दशक्षणा ॥ अथ द्रव्यनाशविशिष्टं कालमवयवं वापेक्ष्य विभागजविभागः स्यात् तदा एकादशक्षणा । तथा हि वह्निसंयोगात् परमाणौ कर्म्म । ततः परमाण्वन्तरेण विभागः । तत आरम्भकसंयोगनाशः । ततो द्व्यणुकनाशः । ततः परमाणौ श्यामादिनाशः । ततो रक्ताद्युत्पत्तिः । ततो द्रव्यारम्भानुगुणक्रिया । ततो विभागः । ततः पूर्व्वसंयोगनाशः । तत आरम्भकसंयोगः । ततो द्व्यणुकोत्पत्तिः । ततो रक्ताद्युत्पत्तिः ॥ ननु श्यामादिनाशक्षणे रक्तोत्पत्तिक्षणे वा परमाणौ द्रव्यारम्भानुगुणक्रियाऽस्त्विति चेत् । न । अग्निसंयुक्ते परमाणौ यत् कर्म्म तद्विनाशमन्तरेण गुणोत्पत्तिमन्तरेण च तत्र परमाणौ क्रियान्तराभावात् । कर्म्मवति कर्म्मानुत्पत्तेः । निर्गुणे द्रव्ये द्रव्यारम्भानुगुणक्रियानुपपत्तेश्च ॥ तथापि परमाणौ श्यामादिनिवृत्तिसमकालं रक्ताद्युत्पत्तिः स्यादिति चेत् । न । पूर्व्वरूपादिध्वंसस्य रूपान्तरे हेतुत्वात् । इति नवक्षणा ॥ अथ दशक्षणा । सा च आरम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागेन विभागजनने सति स्यात् । तथा हि वह्नि-

* स्वतन्त्राः परमाणवः पच्यन्त इति वैशेषिकमतं । इति चमाकरोऽयमतिरिक्तः पाठः ॥

सिद्धा॰ संयोगाद् द्व्यणुकारम्भके परमाणौ क्रिया। ततो विभागः। तत आरम्भकसंयोगनाशः। ततो द्व्यणुकनाशविभागजविभागौ। ततः श्यामनाशपूर्व्वसंयोगनाशौ। ततो रक्तोत्पत्त्युत्तरसंयोगौ। ततो वह्निनोदनजन्यपरमाणुकर्म्मणो नाशः। ततोऽदृष्टवदात्मसंयोगाद् द्रव्यारम्भानुगुणक्रिया। ततो विभागः। ततः पूर्व्वसंयोगनाशः। तत आरम्भकसंयोगः। ततो द्व्यणुकोत्पत्तिः। ततो रक्ताद्युत्पत्तिः॥ अथैकादशक्षणा। वह्निसंयोगात् परमाणौ कर्म्म। ततो विभागः। ततो द्रव्यारम्भकसंयोगनाशः। ततो द्व्यणुकनाशः। ततो द्व्यणुकनाशविशिष्टं कालमपेक्ष्य विभागजविभागः। ततः पूर्व्वसंयोगनाशः। तत उत्तरसंयोगः। ततः परमाणुकर्म्मनाशः। ततोऽदृष्टवदात्मसंयोगाद् द्रव्यारम्भानुगुणक्रिया। ततो विभागः। ततः पूर्व्वसंयोगनाशः। ततो द्रव्यारम्भकसंयोगः। ततो द्व्यणुकं। ततो रक्तादि। मध्यमशब्दवदेकस्मादग्निसंयोगान्न रूपनाशरक्तोत्पादौ। तावत् कालमेकस्याग्नेरस्थिरत्वात्॥ किञ्च यद्युत्पादको नाशकस्तदा नष्टे रूपादावग्निनाशे नीरूपश्चिरं परमाणुः स्यात्। नाशकश्चेदुत्पादकस्तदा रक्तोत्पत्तौ तदग्निनाशे रक्तता न स्यात्॥ एवं परमाण्वन्तरे कर्म्मचिन्तनात् पञ्चमादिक्षणेऽपि गुणोत्पत्तिः। तथाहि एकत्र परमाणौ कर्म्म। ततो विभागः। तत आरम्भकसंयोगनाशपरमाण्वन्तरकर्म्मणी ततस्तु द्व्यणु-

भाषा० नैयायिकानान्तु नये द्व्यणुकादावपीष्यते ।

---

सिद्धा० कनाशः परमाण्वन्तरकर्म्मजश्च विभाग इत्येकः कालः । ततः श्यामादिनाशः विभागाच्च पूर्व्वसंयोगनाश इत्येकः कालः । ततो रक्तोत्पत्तिर्द्रव्यारम्भकसंयोगश्चेत्येकः कालः । अथ द्व्यणुकोत्पत्तिः । अथ रक्तोत्पत्तिरिति पञ्चक्षणा ॥ द्रव्यनाशसमकालं परमाण्वन्तरे कर्म्मचिन्तनात् षष्ठे गुणोत्पत्तिः । तथाहि परमाणुकर्म्मणा परमाण्वन्तरविभागः । तत आरम्भकसंयोगनाशः । अथ द्व्यणुकनाशपरमाण्वन्तरकर्म्मणी । अथ श्यामनाशः परमाण्वन्तरकर्म्मजश्च विभागः । ततो रक्तोत्पत्तिः परमाण्वन्तरे पूर्व्वसंयोगनाशश्च । ततः परमाण्वन्तरसंयोगः ततो द्व्यणुकोत्पत्तिः अथ रक्तोत्पत्तिरिति ॥ एवं श्यामनाशक्षणे परमाण्वन्तरे कर्म्मचिन्तनात् सप्तक्षणा । रक्तोत्पत्तिसमकालं परमाण्वन्तरे कर्म्मचिन्तनात् अष्टक्षणा इति ॥ १०४ ॥

नैयायिकानामिति । नैयायिकानां मते द्व्यणुकादौ अवयविन्यपि पाको भवति । तेषामयमाशयः । अवयविनां सच्छिद्रत्वाद्वह्नेः सूक्ष्मावयवैरन्तःप्रविष्टैरवयवेष्ववष्टब्धेष्वपि पाको न विरुध्यते । वैशेषिकमते ऽनन्तावयवतन्नाशकल्पने गौरवात् । इत्थञ्च सोऽयं घट इत्यादिप्रत्यभिज्ञाऽपि सङ्गच्छते । यत्र तु न प्रत्यभिज्ञा तत्रावयविना-

भाषा० गणनव्यवहारे तु हेतुः संख्याऽभिधीयते ॥ १०५ ॥
नित्येषु नित्यमेकत्वमनित्ये नित्यमिष्यते ।
द्वित्वादयः परार्द्धान्ता अपेक्षाबुद्धिजा मताः ॥ १०६ ॥
अनेकाश्रयपर्य्याप्ता एते तु परिकीर्त्तिताः ।

---

सिद्धा० गोऽपि स्वीक्रियत इति ॥ सङ्ख्यां निरूपयितुमाह । गणनेति । गणनव्यवहारासाधारणकारणं सङ्ख्येत्यर्थः ॥ १०५ ॥

नित्येष्विति । नित्येषु परमाण्वादिषु एकत्वं नित्यं अनित्ये घटादौ एकत्वमनित्यमित्यर्थः ॥ द्वित्वादयो व्यासज्यवृत्ति*संख्या अपेक्षाबुद्धिजन्याः ॥ १०६ ॥

अनेकेति । यद्यपि द्वित्वादिसमवायः प्रत्येकं घटादावपि वर्त्तते तथाप्येको द्वाविति प्रत्ययाभावाद् एको न द्वाविति प्रत्ययसम्भवाच्च द्वित्वादीनां पर्य्याप्तिलक्षणः कश्चन सम्बन्धोऽनेकाश्रयोऽभ्युपगम्यते ॥ अपेक्षाबुद्धिनाशादिति । प्रथममपेक्षाबुद्धिस्ततो द्वित्वोत्पत्तिः । ततो विशेषणज्ञानं द्वित्वत्वनिर्विकल्पकरूपं । ततो द्वित्वविशिष्टप्रत्यक्षं । अपेक्षाबुद्धिनाशे ततो द्वित्वनाश इति ॥ यद्यपि ज्ञानान्तरं न त्रिक्षणमात्रस्थायि योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वात् तथाप्यपेक्षाबुद्धेस्त्रिक्षणस्थायित्वं कल्प्यते । अन्यथा निर्व्विकल्पकाले अपेक्षाबुद्धिनाशाद् अनन्तरं द्वित्वस्यैव नाशः स्यात्

---

* एकत्वानवच्छिन्नपर्य्याप्तिकत्वं व्यासज्यवृत्तित्वं । टी० ।

भाषा० अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः ॥ १०७ ॥
अनेकैकत्वबुद्धिर्या साऽपेक्षाबुद्धिरुच्यते ।

---

सिद्धा० न तु द्वित्वप्रत्ययं । तदानीं विषयाभावात् । विद्यमानस्यैव चक्षुरादिना ज्ञानजननोपगमात् । तस्माद् द्वित्वप्रत्ययादिकमपेक्षाबुद्धेर्नाशकं कल्प्यते ॥ न चापेक्षाबुद्धिनाशात् कथं द्वित्वनाश इति वाच्यं । कालान्तरे द्वित्वप्रत्ययाभावात् । अपेक्षाबुद्धिस्तदुत्पादिका तन्नाशस्तन्नाशक इति कल्पनात् । अत एव तत्पुरुषीयापेक्षाबुद्धिजन्यद्वित्वादिकं तेनैव गृह्यत इति कल्प्यते ॥ न चापेक्षाबुद्धेर्द्वित्वप्रत्ययकारणत्वमस्त्विति वाच्यं । लाघवेन द्वित्वं प्रति कारणत्वस्यैवोचितत्वात् । अतीन्द्रिये द्व्यणुकादावपेक्षाबुद्धिर्योगिनां । सर्गादिकालीनपरमाण्वादावीश्वरीयापेक्षाबुद्धिर्ब्रह्माण्डान्तरवर्त्तियोगिनामपेक्षाबुद्धिर्वा द्वित्वादिकारणमिति ॥ १०७ ॥

अपेक्षाबुद्धिः केत्यत आह । अनेकेति । अयमेक इत्याकारिका इत्यर्थः । इदन्तु बोध्यं यत्रानियतैकत्वज्ञानं तत्र द्वित्वादिभिन्ना बहुत्वसंख्योत्पद्यते यथा सेनावनादाविति कन्दलीकारः ॥ आचार्य्यास्तु त्रित्वादिकमेव बहुत्वं मन्यन्ते । तथा च त्रित्वत्वादिव्यापिका बहुत्वत्वजातिः । सेनादौ चोत्पन्ने त्रित्वादौ त्रित्वत्वाद्यग्रहो दोषात् । इत्यञ्च इतो बहुकेयं सेनेति प्रती-

भाषा० परिमाणं भवेन्मानव्यवहारस्य कारणं ॥ १०८ ॥
अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः ।
अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतं ॥ १०९ ॥
सङ्ख्यातः परिमाणाच्च प्रचयादपि जायते ।
अनित्यं द्व्यणुकादौ तु सङ्ख्याजन्यमुदाहृतं ॥ ११० ॥

---

सिद्धा० निरूपयते । बहुत्वस्य संख्यान्तरत्वे तत्कारणत्वाभावादित्यवधेयं ॥ परिमाणं निरूपयति । परिमाणमिति । परिमितिव्यवहारासाधारणं कारणं परिमाणमित्यर्थः ॥ १०८ ॥

तच्चतुर्विधं अणु महद् दीर्घं ह्रस्वञ्च* । तत् परिमाणं । नित्यमित्यत्र परिमाणमित्यनुषज्यते ॥ १०९ ॥

जायत इत्यत्रापि परिमाणमित्यनुवर्त्तते । अनित्यमिति पूर्व्वेणान्वितं । तथा चानित्यं परिमाणं सङ्ख्याजन्यं परिमाणजन्यं प्रचयजन्यं चेत्यर्थः ॥ तत्र सङ्ख्याजन्यमुदाहरति । द्व्यणुकादाविति । द्व्यणुकस्य त्रसरेणोश्च परिमाणं प्रति परमाणुपरिमाणं द्व्यणुकादिपरिमाणं वा न कारणं । परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वात् । द्व्यणुकादिपरिमाणन्तु परमाणुत्वापेक्षया नोत्कृष्टं । त्रसरेणुपरिमाणन्तु न-

---

* इदञ्चातुर्व्विध्यं प्रत्यक्षसिद्धं । तथाणुत्वह्रस्वत्वे महत्त्वदीर्घत्वे च समनियते इति ॥ निष्प्रयोजनमत्र । विद्वन्मात्रगम्यत्वादपरीक्ष्योऽयं पाठः ।

भाषा० परिमाणं घटादौ तु परिमाणजमुच्यते ।
प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते ॥ १११ ॥
परिमाणं तूलकादौ नाशस्त्वाश्रयनाशतः ।

---

सिद्धा० सजातीयं । अतः परमाणौ द्वित्वसङ्ख्या द्व्यणुकपरिमाणस्य द्व्यणुके त्रित्वसङ्ख्या च त्रसरेणुपरिमाणस्यासमवायिकारणमित्यर्थः ॥ ११० ॥

परिमाणजन्यमुदाहरति । परिमाणं घटादाविति ॥ परिमाणजं कपालादिपरिमाणजन्यं ॥ प्रचयजन्यमुदाहर्त्तुं प्रचयं निर्व्वक्ति । प्रचय इति ॥ १११ ॥

नाश इति । अर्थात् परिमाणस्य । न चावयवनाशः कथं परिमाणनाशकः सत्यप्यवयविनि त्रिचतुरपरमाणुविश्लेषे तदुपचये चावयविनः प्रत्यभिज्ञानेऽपि परिमाणान्तरस्य प्रत्यक्षसिद्धत्वादिति वाच्यं । परमाणुविश्लेषे द्व्यणुकस्य नाशोऽवश्यमभ्युपेयस्तन्नाशे च त्रसरेणुकनाशः । एवं क्रमेण महावयविनो नाशस्यावश्यकत्वात् । सति च नाशकेऽनभ्युपगममात्रेण नाशस्यापवदितुमशक्यत्वात् । शरीरादाववयवोपचयेऽसमवायिकारणनाशस्यावश्यकत्वादवयविनाश आवश्यकः ॥ न च पटाविनाशेऽपि तन्त्वन्तरसंयोगात् परिमाणाधिक्यं स्यादिति वाच्यं । तत्रापि वेमाद्यभिघातेन समवायिकारणतन्तुसंयोगनाशात् पटनाशस्यावश्य-

भाषा० सङ्ख्यावत्तु पृथक्त्वं स्यात् पृथक्प्रत्ययकारणं ॥ ११२ ॥

---

सिद्धा० कत्वात् ॥ किञ्च तन्त्वन्तरस्य तत्पटावयवत्वे पूर्व्वं तत्पट एव न स्यात् । तत्तन्तुरूपकारणाभावात् । तत्तन्तोरवयवत्वाभावे च न तेन परिमाणाधिक्यं संयुक्तद्रव्यान्तरवत् । तस्मात् तत्र तन्त्वन्तरसंयोगे सति पूर्व्वपटनाशस्ततः पटान्तरोत्पत्तिरित्यवश्यं स्वीकार्य्यं । अवयविनः प्रत्यभिज्ञानन्तु साजात्येन दीपकलिकादिवत् ॥ न च पूर्व्वतन्तव एव तन्त्वन्तरसहकारात् पूर्व्वपटे सत्येव पटान्तरमारभन्तामिति वाच्यं । मूर्त्तयोः समानदेशताविरोधात् । एकदा नानाद्रव्यस्य तत्रानुपलम्भबाधितत्वाच्च । पूर्व्वद्रव्यस्य प्रतिबन्धकस्य विनाशे द्रव्यान्तरोत्पत्तिरित्यवश्यमभ्युपेयत्वात् ॥

पृथक्त्वं कारणं निरूपयति । सङ्ख्यावदिति । पृथक्प्रत्ययासाधारणं कारणं पृथक्त्वं । तन्नित्यतादिकं सङ्ख्यावत् । यथा हि नित्येषु एकत्वं नित्यं अनित्येऽनित्यं अनित्यमेकत्वं आश्रयद्वितीयक्षणेनोत्पद्यते आश्रयनाशान्नश्यति तथैकपृथक्त्वमपि । द्वित्वादिवद् द्विपृथक्त्वादिकमपीत्यर्थः ॥ नन्वयमस्मात् पृथग् इत्यादावन्योन्याभावो भासते तत् कथं पृथक्त्वं गुणान्तरं स्वीक्रियते न चास्तु पृथक्त्वं न त्वन्योन्याभाव इति वाच्यं । रूपं न घट इति प्रतीत्यनापत्तेः ॥ ११२ ॥

भाषा० अन्योन्याभावतो नास्य चरितार्थत्वमुच्यते ।
अस्मात् पृथगिदं नेति प्रतीतिर्हि विलक्षणा ॥ ११३ ॥
अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः ।
कीर्त्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्म्मजः ॥ ११४ ॥
तथोभयक्रियाजन्यो भवेत् संयोगजोऽपरः ।
आदिमः श्येनशैलादिसंयोगः परिकीर्त्तितः ॥ ११५ ॥
मेषयोः सन्निपातो यः स द्वितीय उदाहृतः ।

---

सिद्धा० न हि रूपे घटावधिकं पृथक्त्वं गुणान्तरमस्ति न वा घटे घटावधिकपृथक्त्वमस्ति येन परम्परासम्बन्धः कल्प्य इत्यत आह । अन्योन्याभावत इति ॥ विलक्षणेति ॥ ननु शब्दवैलक्षण्यमेव न त्वर्थवैलक्षण्यमिति चेत् । न । विनार्थभेदं घटात् पृथग् इतिवद् घटो नेत्यत्रापि पञ्चमी स्यात् । तस्माद् यदर्थकयोगे पञ्चमी सोऽर्थो नञर्थो ऽन्योन्याभावतो भिन्नो गुणान्तरं कल्प्यत इति ॥ ११३ ॥

संयोगं निरूपयति । अप्राप्तयोरिति । तं विभजते । कीर्त्तित इति । एष संयोगः ॥ ११४ ॥

सन्निपातः संयोगो द्वितीय उभयकर्म्मजः । तृतीय इति संयोगज इत्यर्थः । तृतीयः स्यादिति पूर्व्वेणान्वितं ॥ ११५ ॥

आदिमः अभिघातः । द्वितीयो नोदनाख्यः संयोग इति ॥ विभक्तप्रत्ययकारणं विभागं निरूपयति ।

भाषा॰ कपालतरुसंयोगात् संयोगस्तरुकुम्भयोः ॥ ११६ ॥
तृतीयः स्यात् कर्म्मजोऽपि द्विधैव परिकीर्त्तितः।
अभिघातो नोदनञ्च शब्दहेतुरिहादिमः ॥ ११७ ॥
शब्दाहेतुर्द्वितीयः स्याद्विभागोऽपि त्रिधा भवेत्।
एककर्म्मोद्भवस्त्वाद्यो द्वयकर्म्मोद्भवोऽपरः ॥ ११८ ॥
विभागजस्तृतीयः स्यात् तृतीयोऽपि द्विधा भवेत्।

---

मिक्ता॰ विभाग इति ॥ एककर्म्मेति। उदाहरणन्तु श्येनशैलविभागादिकं पूर्व्ववद्बोध्यं ॥ ११६ ॥ ११७ ॥ ११८ ॥

तृतीयो विभागजः कारणमात्रविभागजन्यः कारणाकारणविभागजन्यश्चेति । आद्यस्तावत् । यत्र कपाले कर्म्म। ततः कपालद्वयविभागः। ततो घटारम्भकसंयोगनाशः। ततो घटनाशः। ततस्तेन कपालविभागेन सकर्म्मणः कपालस्य देशान्तरविभागो जन्यते। ततो देशान्तरसंयोगनाशः। तत उत्तरदेशसंयोगः। ततः कर्म्मनाश इति॥ न च तेन कर्म्मणैव कथं देशान्तरविभागो न जन्यत इति वाच्यं। एकस्य कर्म्मण आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्यानारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वविरोधात्। अन्यथा विकसत्कमलकुड्मलभङ्गप्रसङ्गात्। तस्माद्यदीदमनारम्भकसंयोगप्रतिद्वन्द्विविभागं जनयेत् तदाऽऽरम्भकसंयोगप्रतिद्वन्द्विविभागं न जनयेत्। न च कारणविभागे-

भाषा० हेतुमात्रविभागोत्थो हेत्वहेतुविभागजः ॥ ११९ ॥
परत्वञ्चापरत्वञ्च द्विविधं परिकीर्त्तितं।
दैशिकं कालिकञ्चापि मूर्त्त एव तु दैशिकं ॥ १२० ॥
परत्वं सूर्य्यसंयोगभूयस्त्वज्ञानतो भवेत्।
अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितं ॥ १२१ ॥

---

सिद्धा० नैव द्रव्यनाशात् पूर्व्वं कुतो देशान्तरविभागो न जन्यत इति वाच्यं। आरम्भकसंयोगप्रतिद्वन्द्विविभागवतोऽवयवस्य सति द्रव्ये देशान्तरविभागासम्भवात्। यत्र हस्तक्रियया हस्ततरुविभागः ततः शरीरेऽपि विभक्तप्रत्ययो भवति। तत्र च शरीरतरुविभागे हस्तक्रिया न कारणं। व्यधिकरणत्वाच्छरीरे तु क्रिया नास्ति। अवयविकर्म्मणो यावदवयवकर्म्मनियतत्वात्। अतस्तत्र कारणाकारणविभागेन कार्य्याकार्य्यविभागो जन्यत इति। अत एव विभागो गुणान्तरं। अन्यथा शरीरे विभक्तप्रत्ययो न स्यात्। अतः संयोगनाशेन विभागो नान्यथासिद्धो भवति ॥ ११९ ॥

परापरव्यवहारनिमित्ते परत्वापरत्वे निरूपयति। परत्वञ्चेति। दैशिकमिति ॥ १२० ॥

दैशिकपरत्वं बहुतरसूर्य्यसंयोगान्तरितत्वज्ञानादुत्पद्यते। एवं तदल्पीयस्त्वज्ञानादपरत्वमुत्पद्यते। अत्रावधित्वार्थद्वितीयापेक्षा। यथा पाटलिपुत्रात् काशी-

भाषा० तयोरसमवायी तु दिक्संयोगस्तदाश्रये।
दिवाकरपरिस्पन्दपूर्व्वोत्पन्नत्वबुद्धितः ॥ १२२ ॥
परत्वमपरत्वन्तु तदनन्तरबुद्धितः।
अत्र त्वसमवायी स्यात् संयोगः कालपिण्डयोः॥१२३॥
अपेक्षाबुद्धिनाशेन नाशस्त्वेषामुदाहृतः।
बुद्धेः प्रकारः प्रागेव प्रायशोऽपि निरूपितः॥ १२४ ॥
अथावशिष्टोऽप्यपरः प्रकारः परिदर्श्यते।
अप्रमा च प्रमा चेति ज्ञानं द्विविधमुच्यते॥ १२५ ॥
तच्छून्ये तन्मतिर्य्या स्यादप्रमा सा निरूपिता।

---

सिद्धा० मपेक्ष्य प्रयागः परः। पाटलिपुत्रात् कुरुक्षेत्रमपेक्ष्य प्रयागोऽपर इति ॥ १२१ ॥

तयोर्दैशिकपरत्वापरत्वयोः। असमवायी असमवायिकारणं। तदाश्रये दैशिकपरत्वापरत्वाश्रये॥ दिवाकरेति॥ १२२ ॥

अत्र परत्वं अपरत्वञ्च कालिकं ग्राह्यं। यस्य सूर्य्यपरिस्पन्दापेक्षया यस्य सूर्य्यपरिस्पन्दोऽधिकः स ज्येष्ठः। यस्य न्यूनः स कनिष्ठः। कालिकपरत्वापरत्वे जन्यद्रव्य एव। अत्र कालिकपरत्वापरत्वयोः॥ १२३॥

एषां कालिकदैशिकपरत्वापरत्वानां॥ क्रमप्राप्तां बुद्धिं निरूपयितुमाह। बुद्धेरिति॥ १२४॥ १२५॥

अप्रमां विभजते। तच्छून्य इति। तदभाववति

भाषा० तत्प्रपञ्चो विपर्य्यासः संशयोऽपि प्रकीर्त्तितः ॥ १२६ ॥
आद्यो देहे याऽऽत्मबुद्धिः शङ्खादौ पीततामतिः ।
भवेन्निश्चयरूपा या संशयोऽथ प्रदर्श्यते ॥ १२७ ॥
किंस्वित् नरो वा स्थाणुर्व्वेत्यादिबुद्धिस्तु संशयः ।
तदभावाप्रकारा धीस्तत्प्रकारा तु निश्चयः ॥ १२८ ॥
स संशयो मतिर्या स्यादेकत्राभावभावयोः ।

---

सिद्धा० तत्प्रकारकं ज्ञानं भ्रम इत्यर्थः ॥ तत्प्रपञ्चः अप्रमाप्रपञ्चः ॥ १२६ ॥

आद्य इति । विपर्य्यास इत्यर्थः । शरीरादौ यदात्मत्वप्रकारकं ज्ञानं गौरोऽहमित्याकारकं । एवं शङ्खादौ पीतः शङ्ख इत्याकारकं यज्ज्ञानं निश्चयरूपं तद्भ्रम इति ॥ १२७ ॥

किंस्विदिति ॥ किंस्विदिति वितर्के ॥ निश्चयस्य लक्षणमाह । तदभावेति । तदभावाप्रकारकत्वे सति तत्प्रकारकं ज्ञानं निश्चयः ॥ १२८ ॥

संशयं लक्षयति । संशय इति । एकधर्म्मिकविरुद्धभावाभावप्रकारकं ज्ञानं संशय इत्यर्थः ॥ साधारणेति । उभयसाधारणो यो धर्मस्तज्ज्ञानं संशयकारणं । यथा उच्चैस्तरत्वं स्थाणुत्वसाधारणं ज्ञात्वा अयं स्थाणुर्न वेति सन्दिग्धे । एवं असाधारणज्ञानं कारणं । यथा शब्दत्वं नित्यानित्यव्यावृत्तं शब्दे गृहीत्वा शब्दो नित्यो न वेति

भाषा० साधारणादिधर्मस्य ज्ञानं संशयकारणं ॥ १२९ ॥
दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् ।

---

सिद्धा० सन्दिग्धे । विप्रतिपत्तिस्तु शब्दो नित्यो न वेत्यादिशब्दात्मिका न संशयकारणं । शब्दव्याप्तिज्ञानादीनां निश्चयमात्रजनकत्वस्वाभाव्यात् । किन्तु तत्र शब्देन कोटिद्वयज्ञानं जन्यते । संशयस्तु मानस एवेति । एवं ज्ञाने प्रामाण्यसंशयाद्विषयसंशय इति । एवं व्याप्यसंशयादपि व्यापकसंशय इत्यादिकं बोध्यं । किन्तु संशये धर्मिज्ञानं धर्मीन्द्रियसन्निकर्षो वा कारणमिति ॥ १२९ ॥

दोष इति । अप्रमां प्रति दोषः कारणं । प्रमां प्रति गुणः कारणं । तत्रापि पित्तादिरूपा दोषा अननुगताः । तेषां कारणत्वं अन्वयव्यतिरेकाभ्यामेव सिद्धं । गुणस्य प्रमाजनकत्वन्तु अनुमानात् सिद्धं । यथा प्रमा ज्ञानसाधारणकारणभिन्नकारणजन्या जन्यज्ञानत्वाद् अप्रमावत् ॥ न च दोषाभाव एव कारणमस्त्विति वाच्यं । पीतः शङ्ख इतिज्ञानस्थले पित्तदोषसत्त्वाच्छङ्खत्वप्रमानुत्पत्तिप्रसङ्गात् । विनिगमनाविरहाद् अप्रमादोषाभावस्य कारणत्वमपेक्ष्य गुणकारणताया न्याय्यत्वात् ॥ न च गुणसत्त्वेऽपि पित्तप्रतिबन्धाच्छङ्खे न श्वैत्यज्ञानं अतः पित्तादिदोषाभावानां कारणत्वमवश्यं वाच्यं तथा च किं गुणस्य हेतुत्वकल्पनयेति वाच्यं ।

भाषा० पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः ॥ १३० ॥
प्रत्यक्षे तु विशेष्येण विशेषणवता समं ।
सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ गुणः ॥ १३१ ॥
पक्षे साध्यविशिष्टे च परामर्शो गुणो भवेत् ।
शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥ १३२ ॥
शाब्दबोधे योग्यतायास्तात्पर्य्यस्याथवा प्रमा ।
गुणः स्याद् भ्रमभिन्नन्तु ज्ञानमत्रोच्यते प्रमा ॥ १३३ ॥
अथवा तत्प्रकारं यज्ज्ञानं तद्विशेष्यकं ।

---

सिद्धा० तथाप्यन्वयव्यतिरेकाभ्यां गुणस्यापि हेतुत्वसिद्धेः । एवं भ्रमं प्रति गुणाभावः कारणमित्यस्यापि सुवचत्वाच्च । तत्र दोषाः के इत्याकाङ्क्षायामाह । पित्तेति । क्वचित् पित्तादिभ्रमे पित्तं दोषः । क्वचिच्चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः । क्वचिच्च वंशोरगभ्रमे मण्डूकवसाञ्जनमित्येवं दोषा भ्रान्तिजनका इत्यर्थः ॥ १३० ॥

अथ के गुणा इत्याकाङ्क्षायां प्रत्यक्षादौ क्रमशो गुणान् दर्शयति । प्रत्यक्षे त्विति । प्रत्यक्षे विशेषणवद्विशेष्यसन्निकर्षो गुणः । अनुमितौ साध्यवति साध्यव्याप्यवैशिष्ट्यज्ञानं गुण इति । एवमग्रेऽप्यूह्यः ॥ १३१ ॥ १३२ ॥

प्रमां निरूपयति । भ्रमभिन्नमिति ॥ १३३ ॥

ननु यत्र शुक्तिरजतयोरिमे रजते इति ज्ञानं जातं तत्र रजतांशेऽपि प्रमा न स्यात् तज्ज्ञानस्य भ्रमभिन्न-

भाषा० तत् प्रमा न प्रमा नापि भ्रमः स्यान्निर्व्विकल्पकं ॥१३४॥
प्रकारतादिशून्यं हि सम्बन्धानवगाहि तत्।

सिद्धा० लाभावाद् अत आह। अथवेति। तद्वद्विशेष्यकं तत्प्रकारकं ज्ञानं प्रमा इत्यर्थः। इदन्तु बोध्यं। येन सम्बन्धेन तद्वत्ता तेन सम्बन्धेन तद्वद्विशेष्यकं तेन सम्बन्धेन तत्प्रकारकत्वं वाच्यं। तेन कपालादौ संयोगादिना घटादिज्ञाने नातिव्याप्तिः॥ एवं सति निर्व्विकल्पकं प्रमा न स्यात् तस्य सप्रकारकत्वाभावाद् अत आह। न प्रमेति॥ ननु वृक्षे कपिसंयोगज्ञानं भ्रमः स्यात् प्रमा च स्यादिति चेत्। न। प्रतियोगिव्यधिकरणसंयोगाभाववति संयोगज्ञानस्य भ्रमत्वात्॥ न च वृक्षे संयोगाभावावच्छेदकावच्छेदेन संयोगज्ञानं भ्रमो न स्यात् तत्र संयोगाभावस्य प्रतियोगिव्यधिकरणत्वाभावादिति वाच्यं। तत्र संयोगाभावावच्छेदकावच्छेदेन संयोगज्ञानस्य भ्रमत्वात्। लक्षणस्याननुगमात्। लक्षणाननुगमेऽपि न क्षतिः॥ १३४॥

प्रमात्वमिति। मीमांसका हि प्रमात्वं स्वतो ग्राह्यमिति वदन्ति। तत्र गुरूणां मते ज्ञानस्य स्वप्रकाशरूपत्वात् तज्ज्ञानप्रामाण्यं तेनैव गृह्यते इति॥ भट्टानां मते ज्ञानमतीन्द्रियं। ज्ञानजन्या ज्ञातता प्रत्यक्षा। तया च ज्ञानमनुमीयते॥ मुरारिमिश्राणां मतेऽनुव्यवसायेन ज्ञानं गृह्यते। सर्व्वेषामपि मते तज्ज्ञानवि-

सिद्धा॰ षयकज्ञानेन तज्ज्ञानप्रामाण्यं गृह्यते। विषयनिरूप्यं हि ज्ञानं*। अतो ज्ञानवित्तिवेद्यो विषयः। तन्मतं दूषयति। न स्वतो ग्राह्यमिति। संशयेति। यदि ज्ञानप्रामाण्यं स्वतो ग्राह्यं स्यात् तदाऽभ्यासदशोत्पन्नज्ञाने तत्संशयो न स्यात्। तत्र हि यदि ज्ञानं ज्ञातं तदा प्रामाण्यं ज्ञातमेवेति कथं संशयः। यदि तु ज्ञानं न ज्ञातं तदाधर्म्मिज्ञानाभावात् कथं संशयः। तस्माज्ज्ञानप्रामाण्यमनुमेयं। तथा हि इदं ज्ञानं प्रमा सम्वादिप्रवृत्तिजनकत्वाद् यन्नैवं तन्नैवं यथाऽप्रमा। इदं पृथिवीत्वप्रकारकं ज्ञानं प्रमा। गन्धवति पृथिवीत्वप्रकारकज्ञानत्वात्। एवं इदं जलज्ञानं प्रमा। स्नेहवति जलत्वप्रकारकज्ञानत्वात्॥ न च हेतुज्ञानं कथं जातमिति वाच्यं। पृथिवीत्वप्रकारकत्वस्य स्वतो ग्राह्यत्वात्। तत्र गन्धवद्विशेष्यकत्वस्यापि सुग्रहत्वात्। तत्प्रकारकत्वावच्छिन्नतद्वद्विशेष्यकत्वं परं न गृह्यते। संशयानुरोधात्॥ न च प्रमात्वस्य साध्यस्य प्रसिद्धिः कथमिति वाच्यं। इदं ज्ञानप्रमात्वस्य स्वतो ग्राह्यत्वात्॥ न च प्रकारभेदेन प्रामाण्यभेदाद् घटत्ववति घटत्वप्रकारादेः कथं प्रसिद्धिरिति वाच्यं। घटत्वप्रकारकत्वस्य स्वविशे-

---

* विषयविषयताकमिथतत्त्वविषयताकप्रत्यक्षकं ज्ञानमित्यर्थः। अनुमितिप्रकारस्तु ज्ञानं विषयविषयताकप्रत्यक्षकं विषयाविषयकप्रत्यक्षाविषयत्वे सति प्रत्यक्षाविषयत्वादित्यनुमानं। ज्ञानप्रत्यक्षस्य विषयविषयत्वे प्रमाणमिति भावः॥

सिद्धा॰ ध्यकत्वस्य च स्वतो ग्राह्यत्वात्। घटस्य च पूर्व्वमुपस्थित-त्वाद् घटविशेष्यकं घटत्वप्रकारकमिति ज्ञाने प्रामाण्यस्य बाधकाभावः। व्यवसायपरन्तु प्रामाण्यं न गृह्यते। तत्र संशयसामग्रीसत्त्वे संशयस्यैवोपपत्तेः। किञ्चाभ्यास-दशायां तृतीयानुव्यवसायादिना प्रामाण्यस्य स्वत एव ग्रहसम्भवात् प्रथमानुव्यवसायपरं न तद्ग्राहकत्वमिति कल्प्यते संशयानुरोधात्॥ अथ प्रामाण्यानुमितौ प्रा-माण्यग्रहे न तस्य विषयनिश्चयरूपत्वार्थं तत्र प्रामा-ण्यग्रहो वाच्यः। सोऽप्यनुमित्यन्तरेणेति फलमुखी का-रणमुखी वा मानवस्थेति चेन्न। अगृहीतप्रामाण्यग्र-हकस्यैव निश्चयरूपत्वात्। यत्र च प्रामाण्यसंशयस्तत्रैव परं प्रामाण्यानुमितेरपेक्षाया यदाशङ्कं प्रामाण्यानु-मितिरिष्यत एव सर्व्वत्र तु न संशयः। क्वचित् कोट्य-नुपस्थितेः क्वचिद्विशेषदर्शनादितः क्वचिद्विषयान्तरस-ञ्चारादिति सङ्क्षेपः॥ ननु सर्व्वेषां ज्ञानानां यथार्थ-त्वात् प्रमालक्षणे तद्विशेष्यकत्वं विशेषणं व्यर्थं॥ न च रङ्गे रजतार्थिनः प्रवृत्तिर्भ्रमजन्या न स्यात् तव मते भ्रमस्याभावादिति वाच्यं। तत्र हि दोषाधीनस्य पुरोवर्त्तिनि स्मृतस्योपस्थितरजतभेदाग्रहस्य हेतुत्वात्। सत्यरजतस्थले तु विशिष्टज्ञानस्य सत्त्वात् तदेव कारणं। अस्तु वा तत्रापि भेदाग्रह एव कारणमिति। न चाऽन्य-था ख्यातिः सम्भवति। रजतप्रत्यक्षकारणस्य रजतसन्नि-

भाषा॰ प्रमात्वं न स्वतो ग्राह्यं संशयानुपपत्तितः ॥ १३५ ॥

---

सिद्धा॰ कर्षस्याभावात्। रङ्गे रजतबुद्धेरनुपपत्तेरिति चेन्न। सत्यरजतस्थले प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुतायाः क्लृप्तत्वात्। अन्यत्रापि तत्कल्पनात् ॥ न च सम्वादिप्रवृत्तौ तत्कारणं विसम्वादिप्रवृत्तौ तु भेदाग्रहः कारणमिति वाच्यं। लाघवात् प्रवृत्तिमात्रे तस्य हेतुत्वकल्पनात्। इत्यञ्च रङ्गे रजतत्वविशिष्टबुद्ध्यनुरोधेन ज्ञानलक्षणाप्रत्यासत्तिकल्पनेऽपि न क्षतिः। फलमुखगौरवस्यादोषत्वात्। किञ्च यत्र रङ्गरजतयोरिमे रजते इति ज्ञानं जातं तत्र न कारणबाधोऽपि। अपि च यत्र रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानं तत्रोभयत्र युगपत्प्रवृत्तिनिवृत्ती स्यातां। रङ्गे रङ्गभेदग्रहे रजते रजतभेदग्रहे ऽन्यथाख्यातिभयात्। त्वन्मते रङ्गे रङ्गभेदाग्रहस्य रजते रजतभेदाग्रहस्य च सत्त्वात्। दोषादेव रङ्गे रजतभेदाग्रहस्य रजते रङ्गभेदाग्रहस्य च सत्त्वात्। किञ्चानुमितिं प्रति भेदाग्रहस्य हेतुत्वे जलह्रदे वह्निव्याप्यधूमवदभेदाग्रहाद् अनुमितिर्निर्व्वाधा। यदि च विशिष्टज्ञानं कारणं तदाऽयोगोलके वह्निव्याप्यधूमज्ञानमनुमित्यनुरोधादापतितं। इत्थं अन्यथा ख्यातौ प्रत्यक्षमेव प्रमाणं। रङ्गं रजततया जानामीत्यनुभवादिति सङ्क्षेपः ॥ १३५ ॥

भाषा० व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा।
हेतुर्व्याप्तिग्रहे तर्कः क्वचित् शङ्कानिवर्त्तकः ॥ १३६ ॥

---

सिद्धा० पूर्व्वं व्याप्तिरुक्ता तद्ग्रहोपायस्तु न दर्शित इत्यतस्तं दर्शयति। व्यभिचारस्येति। व्यभिचाराग्रहः सहचारग्रहश्च व्याप्तिग्रहे कारणमित्यर्थः। व्यभिचारग्रहस्य व्याप्तिग्रहप्रतिबन्धकत्वात् तदभावः कारणं। अन्वयव्यतिरेकाभ्यां सहचारग्रहस्यापि हेतुता। भूयोदर्शनन्तु न कारणं। व्यभिचारास्फूर्त्तौ सकृद्दर्शनेऽपि क्वचिद् व्याप्तिग्रहात्। क्वचिद् व्यभिचारशङ्काविधूननद्वारा भूयोदर्शनमुपयुज्यते। यत्र तु भूयोदर्शनादपि शङ्का नापैति तत्र विपक्षबाधकतर्कोऽपेक्षितः। तथापि वह्निविरहिण्यपि धूमः स्यादिति यद्याशङ्का भवति तदा सा वह्निधूमयोः कार्य्यकारणभावस्य प्रतिसन्धानान्निवर्त्तते। यद्ययं वह्निमान् न स्यात् तदा धूमवान् न स्यात्। कारणं विना कार्य्यानुपपत्तेः। यदि क्वचित् कारणं विनापि भविष्यति अहेतुक एव वा भविष्यतीति तत्राशङ्का भवति तदा सा व्याघातादपसरणीया। यदि कारणं विना कार्य्यं स्यात् तदा धूमार्थं वह्नेस्तृप्त्यर्थं भोजनस्य नियमत उपादानं तवैव न स्यादिति। यत्र स्वत एव शङ्का नावतरति तत्र न तर्कापेक्षापीति तदिदमुक्तं तर्कः क्वचित् शङ्कानिवर्त्तक इति॥ १३६ ॥

भाषा० साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा ।

---

सिद्धा० इदानीं परकीयव्याप्तिग्रहप्रतिबन्धार्थमुपाधिं निरूपयति । साध्यस्येति । साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापक इत्यर्थः ॥ ननु स श्यामो मित्रातनयत्वाद् इत्यत्र शाकपाकजत्वं नोपाधिः स्यात् । तस्य साध्यव्यापकत्वाभावात् । श्यामत्वस्य घटादावपि सत्त्वात् । एवं वायुः प्रत्यक्षः स्पर्शाश्रयत्वाद् इत्यत्र उद्भूतरूपवत्त्वं नोपाधिः स्यात् । प्रत्यक्षत्वस्यात्मादिषु सत्त्वात् तत्र रूपाभावात् । एवं ध्वंसो विनाशी जन्यत्वाद् इत्यत्र भावत्वं नोपाधिः स्याद् विनाशित्वस्य प्रागभावे सत्त्वात् ॥ तत्र च भावत्वाभावादिति चेन्न । यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थतात्पर्य्यात् । मित्रातनयत्वावच्छिन्नश्यामत्वस्य व्यापकं शाकपाकजत्वं । एवं वहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वस्य व्यापकमुद्भूतरूपवत्त्वं वहिर्द्रव्यत्वावच्छिन्नसाधनस्याव्यापकञ्च । एवं ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नसाध्यव्यापकं* भावत्वं । सद्धेतौ तु एतादृशो धर्म्मो नास्ति । यदवच्छिन्नस्य साध्यस्य व्यापकं तदवच्छिन्नस्य साधनस्याव्यापकं किञ्चित् स्यात् । व्यभिचारिणि तु

---

* काकः श्यामो मित्रातनयत्वाद् इत्यादावपि मित्रातनयत्वावच्छिन्नश्यामत्वस्य व्यापकत्वं शाकपाकजत्वं इति समाकरोऽयं पाठः ।

भाषा० सं उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते ॥ १३७ ॥
सर्व्वे साध्यसमानाधिकरणाः स्युरुपाधयः ।
हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता ॥ १३८ ॥
व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनं ।

---

सिद्धा० अत्रत उपाध्यधिकरणं यत्साध्याधिकरणं यच्चोपाधिशून्यं साध्यव्यभिचारनिरूपकमधिकरणं तदन्यतरत्वावच्छिन्नस्य साध्यस्य व्यापकत्वं साधनस्य चाव्यापकत्वमुपाधेः सम्भवतीति ॥ १३७ ॥

अत एव लक्ष्यमपि रूपमेतदनुसारेण दर्शयति । सर्व्वे इति ॥ स्वसाध्येति । स्वं उपाधिः स्वस्य साध्यस्य स्वसाध्ये तयोर्व्यभिचारिता इत्यर्थः ॥ १३८ ॥

उपाधेर्दूषकताबीजमाह । व्यभिचारस्येति। उपाधिव्यभिचारेण साध्यव्यभिचारानुमानं उपाधेः प्रयोजनमित्यर्थः । तथाहि यत्र शुद्धसाध्यव्यापक उपाधिस्तत्र शुद्धेनोपाधिव्यभिचारेण साध्यव्यभिचारानुमानं । यथा धूमवान् वह्नेरित्यादौ वह्निर्धूमव्यभिचारी आर्द्रेन्धनव्यभिचारित्वाद् इति व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यकत्वात्। यत्र तु किञ्चिद्धर्म्मावच्छिन्नसाध्यव्यापक उपाधिस्तत्र तद्धर्म्मवति उपाधिव्यभिचारेण साध्यव्यभिचारानुमानं। यथा श्यामो मित्रातनयत्वाद् इत्यत्र मित्रातनयत्वं श्यामत्वव्यभि-

भाषा० शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते ॥ १३९ ॥
अनुमानगतार्थत्वादिति वैशेषिकं मतं ।

---

सिद्धा० चारि । मित्रातनये शाकपाकजत्वव्यभिचारित्वादिति। बाधानुन्नीतपक्षेतरस्तु साध्यव्यापकताग्राहकप्रमाणाभावात् स्वव्याघातकत्वाच्च नोपाधिः । बाधोन्नीतस्तु पक्षेतर उपाधिर्भवत्येव । यत्र वह्निरनुष्णः कृतकत्वाद् इत्यादौ प्रत्यक्षेण वह्नेरुष्णत्वग्रहे वह्नीतरत्वमुपाधिः। यत्र साध्यव्यापकत्वादिकं सन्दिह्यते स सन्दिग्धोपाधिः। पक्षेतरस्तु सन्दिग्धोपाधिरपि नोद्भावनीयः कथकसम्प्रदायानुरोधादिति ॥ केचित्तु सत्प्रतिपक्षोत्थापनमुपाधिफलं । तथाहि अयोगोलकं धूमवद्वह्नेरित्यादौ अयोगोलकं धूमाभाववद् आर्द्रेन्धनाभावाद् इति सत्प्रतिपक्षसम्भवात् । इत्यञ्च साधनव्यापकोऽपि क्वचिदुपाधिः। यथा करका पृथिवी कठिनसंयोगवत्त्वादित्यादौ अनुष्णाशीतस्पर्शवत्त्वं ॥ न चात्र स्वरूपसदुपाधिरेव दूषणमिति वाच्यं। सर्व्वत्रोपाधेर्दूषणान्तरसाङ्कर्य्यात् । अत्र च साध्यव्यापकपक्षावृत्तिरुपाधिरिति वदन्ति । शब्दोपमानयोरिति ॥ १३८ ॥

वैशेषिकाणां मते प्रत्यक्षमनुमानञ्च प्रमाणं शब्दोपमानयोरनुमानविधयैव प्रामाण्यं । तथा हि दण्डेन गामभ्याजेत्यादिपदानि वैदिकपदानि वा तात्पर्य्य-

भाषा० तन्न सम्यग्विना व्याप्तिबोधं शब्दादिबोधतः ॥ १४० ॥
द्वैविध्यन्तु भवेद् व्याप्तेरन्वयव्यतिरेकतः ।

सिद्धा० विषयस्मारितपदार्थसंसर्गज्ञानपूर्व्वकाणि आकाङ्क्षादिमत्पदकदम्बत्वात् घटमानयेतिपदकदम्बवत् । यद्वा एते पदार्था मिथः संसर्गवन्तः योग्यतादिमत्पदोपस्थापितत्वात् तादृशपदार्थवत् । दृष्टान्तेऽपि दृष्टान्तान्तरेण साध्यसिद्धिरिति । एवं गवयव्यक्तिप्रत्यक्षानन्तरं गवयपदं गवयत्वप्रवृत्तिनिमित्तकं* असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् । यथा गोपदं गोत्वप्रवृत्तिनिमित्तकं । यद्वा गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वाद् इत्यनुमानेन पक्षधर्म्मताबलाद् गवयत्वप्रवृत्तिनिमित्तकं भासते तन्मतं दूषयति । तन्न सम्यगिति॥ विना व्याप्तिज्ञानं शब्दादितो बोधस्यानुभविकत्वात् । न हि सर्व्वत्र शब्दश्रवणाद्यनन्तरं व्याप्तिज्ञाने मानमस्तीति । किञ्च सर्व्वत्र शब्दस्थले यदि व्याप्तिज्ञानं कल्प्यते तदा सर्व्वत्रानुमितिस्थले पदज्ञानं कल्पयित्वा शाब्दबोध एव किं न स्वीक्रियत इति ॥ १४० ॥

द्वैविध्यमिति । अनुमानं हि त्रिविधं केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् । तत्रासद्विपक्षः केवलान्वयी । यथा ज्ञेयं अभिधेयादित्यादौ । तत्र हि सर्व्वस्यैव ज्ञेयत्वाद् विपक्षासत्त्वं ॥ ननु सर्व्वेषां

* गवयव्यक्तावभिव्रयं शक्यमित्यर्थः ॥

भाषा॰ अन्वयव्याप्तिरुक्तैव व्यतिरेकादथोच्यते ॥ १४१ ॥
साध्याभावव्यापकत्वं चेत्त्वभावस्य यद्भवेत् ।

---

सिद्धा॰ धर्म्माणां व्यावृत्तत्वात् केवलान्वय्यसिद्धिरिति चेन्न । व्यावृत्तत्वस्य सर्व्वसाधारणे तस्यैव केवलान्वयित्वात् ॥ किञ्च वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वं । तच्च गगणाभावादौ प्रसिद्धं ॥ असत्सपक्षः केवलव्यतिरेकी । यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ । तत्र हि जलादित्रयोदशभेदस्य पूर्व्वमनिश्चिततया निश्चितसाध्यवतः सपक्षस्याभाव इति ॥ सत्सपक्षविपक्षोऽन्वयव्यतिरेकी । यथा वह्निमान् धूमादित्यादौ । तत्र सपक्षस्य महानसादेर्विपक्षस्य जलह्रदादेश्च सत्त्वादिति ॥ १४१ ॥

तत्र व्यतिरेकिणि व्यतिरेकव्याप्तिज्ञानं कारणं तदर्थं व्यतिरेकव्याप्तिं निर्व्वक्ति । साध्याभावव्यापकत्वं चेत्त्वभावस्य यद्भवेद् इति । साध्याभावव्यापकीभूताभावप्रतियोगित्वमित्यर्थः । अत्रेदं बोध्यं । येन सम्बन्धेन यत्र येन रूपेण व्यापकता गृह्यते तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्म्मावच्छिन्नाभाववत्ताज्ञानाद् यत्सम्बन्धेन यद्धर्म्मावच्छिन्नस्य व्याप्यता गृह्यते तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्म्मावच्छिन्नाभावस्य सिद्धिः । इत्यञ्च यत्र विशेषणतादिसम्बन्धेनेतरत्वव्याप-

भाषा॰ अर्थापत्तेस्तु नैवेह प्रमाणान्तरतेष्यते ॥ १४२ ॥

सिद्धा॰ कत्वं गन्धाभावे गृह्यते तत्र गन्धाभावाभावेनेतरत्वात्यन्ताभावः सिध्यति। यत्र तु तादात्म्यसम्बन्धेनेतरव्यापकता गृह्यते तत्र तादात्म्यसम्बन्धेनेतरस्याभावः सिध्यति। स एवान्योन्याभावः॥ एवं यत्र संयोगसम्बन्धेन धूमं प्रति संयोगसम्बन्धेन वह्नेर्व्यापकता गृह्यते तत्र संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावेन जलह्रदे संयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावः सिध्यति। अत्र च व्यतिरेकव्याप्तिग्रहे व्यतिरेकसहचारज्ञानं कारणं। केचित्तु व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते न तु व्यतिरेकव्याप्तिज्ञानं कारणं। यत्र व्यतिरेकसहचाराद्व्याप्तिग्रहस्तत्र व्यतिरेकीत्युच्यते। साध्यप्रसिद्धिस्तु घटादावेव ज्ञायतां पश्चात् पृथिवीत्वावच्छेदेन साध्यत इति वदन्ति॥

अर्थापत्तेस्त्विति। अर्थापत्तिं प्रमाणान्तरं मन्यन्ते केचन। तथा हि यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवगतं जीविनो गृहासत्त्वञ्च प्रत्यक्षादवगतं तत्र शतवर्षजीवित्वान्यथानुपपत्त्या बहिःसत्त्वं कल्प्यते तदनुमानेन गतार्थत्वान्नेष्यते तथाहि जीवितस्य बहिःसत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतं। तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधा द्बहिःसत्त्वमनुमितौ भासते।

भाषा॰ व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ।
सुखन्तु जगतामेव काम्यं धर्म्मेण जन्यते ॥ १४३ ॥
अधर्म्मजन्यं दुःखं स्यात् प्रतिकूलं सचेतसां ।
निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते ॥ १४४ ॥

---

सिद्धा॰ एवं पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ पीनत्वस्य भोजनव्याप्यत्वावगमाद्भोजनं सिध्यति । दिवाभोजनबाधे रात्रिभोजनं सिध्यति । अभावप्रत्यक्षस्यानुभविकत्वादनुपलब्धोऽपि न प्रमाणान्तरं । किञ्चानुपलम्भस्याज्ञानस्य हेतुत्वे ज्ञानाकरणकत्वात् प्रत्यक्षत्वं । ज्ञानस्य हेतुत्वे तु तत्राप्यनुपलम्भान्तरापेक्षेत्यनवस्था । चेष्टापि प्रमाणान्तरं न । तस्याः सङ्केतग्राहकशब्दस्मारकत्वेन लिप्यादिसमशीलत्वाच्छब्द एवान्तर्भावात् । यत्र तु व्याप्त्यादिग्रहस्तत्रानुमितिरेवेति ॥ १४२ ॥

सुखं निरूपयति । सुखन्तु जगतामेव काम्यं धर्म्मेण जन्या इति । काम्यमभिलाषविषयः । धर्म्मेति धर्म्मत्वेन सुखत्वेन कार्य्यकारणभाव इत्यर्थः ॥ १४३ ॥

दुःखन्निरूपयति । अधर्म्मेति । अधर्म्मत्वेन दुःखत्वेन कार्य्यकारणभाव इत्यर्थः । प्रतिकूलमिति दुःखत्वज्ञानादेव सर्व्वेषां स्वाभाविकविषय इत्यर्थः ॥ इच्छां निरूपयति । निर्दुःखत्व इति ॥ १४४ ॥

भाषा० इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ।
चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा च या भवेत् ॥ १४५ ॥
तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् ।
बलवद्द्विष्टहेतुत्वमतिः स्यात् प्रतिबन्धिका ॥ १४६ ॥
तद्‌हेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते ।

---

सिद्धा० इच्छा हि फलविषयिणी उपायविषयिणी च । फलन्तु सुखं दुःखाभावश्च । तत्र फलेच्छां प्रति फलज्ञानं कारणं । अत एव स्वतः पुरुषार्थः समावति । यज्ज्ञाने सत् स्ववृत्तितयेष्यते स स्वतः पुरुषार्थ इति तल्लक्षणात् । इतरेच्छानधीनेच्छाविषयत्वं फलितोऽर्थः । उपायेच्छां प्रतीष्टसाधनताज्ञानं कारणं ॥ चिकीर्षेति । कृतिसाध्यत्वप्रकारिका कृतिसाध्यक्रियाविषयिणीच्छा चिकीर्षा । पाकं कृत्या साधयामीति तदनुभवात् ॥ १४५ ॥

चिकीर्षां प्रति कृतिसाध्यताज्ञानमिष्टसाधनताज्ञानञ्च कारणं । अत एव वृष्ट्यां कृतिसाध्यताभावान्न चिकीर्षा ॥ बलवदिति । बलवद्द्विष्टसाधनताज्ञानं तत्र प्रतिबन्धकं । अतो मधुविषसंपृक्तान्नभोजने न चिकीर्षा । बलवद्द्वेषः प्रतिबन्धक इत्यन्ये ॥ १४६ ॥

कस्यचिन्मत इति । बलवदनिष्टाजनकत्वज्ञानं कारणमित्यर्थः । कृतिसाध्यताज्ञानादिमता बलवदनिष्टसा-

भाषा० द्विष्टसाधनताबुद्धिर्भवेद् द्वेषस्य कारणं ॥ १४७ ॥
प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणं।
एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिदर्शितं ॥ १४८ ॥
चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा।

---

सिद्धा० धनताज्ञानशून्यस्य बलवदनिष्टाजनकत्वज्ञानं विनापि चिकीर्षायां विलम्बाभावात् कस्यचिन्मत इत्यस्वरसो दर्शितः॥ द्वेषं निरूपयति। द्विष्टसाधनतेति। दुःखोपायविषयकं द्वेषं प्रति द्विष्टसाधनताज्ञानं कारणमित्यर्थः। बलवदिष्टसाधनताज्ञानस्य प्रतिबन्धकं। तेन नान्तरीयकदुःखजनके पाकादौ न द्वेषः॥ १४७ ॥

यत्नं निरूपयति। प्रवृत्तिश्चेति। प्रवृत्तिनिवृत्तिजीवनयोनियत्नभेदात् प्रयत्नस्त्रिविध इत्यर्थः ॥१४८॥

चिकीर्षेत्यादि। मधुविषसंपृक्तान्नभोजनादौ बलवदनिष्टानुबन्धित्वेन चिकीर्षाभावान्न प्रवृत्तिरिति भावः। कृतिसाध्यताज्ञानादिव बलवदनिष्टाननुबन्धित्वज्ञानमपि स्वतन्त्रान्वयव्यतिरेकात् प्रवृत्तौ कारणमित्यपि वदन्ति॥ कार्य्यताज्ञानं प्रवर्त्तकमिति गुरवः। तथाहि ज्ञानस्य प्रवृत्तौ जननीयायां चिकीर्षातिरिक्तं नापेक्षितमस्ति। सा च कृतिसाध्यताज्ञानसाध्या। इच्छायाः स्वप्रकारप्रकारकधीसाध्यत्वनियमात्। चिकीर्षा हि कृतिसाध्यत्वप्रकारिकेच्छा। तच्च कृतिसाध्यत्वं प्रकार-

सिद्धा० स्वप्रकारकज्ञानं चिकीर्षायां तद्द्वारा प्रवृत्तौ च हेतुः। न त्विष्टसाधनताज्ञानं तत्र हेतुः। कृत्यसाध्येऽपि प्रवृत्त्यापत्तेः। कृत्यसाध्यताज्ञानं प्रतिबन्धकमिति चेन्न। तदभावापेक्षया कृतिसाध्यताज्ञानस्य लघुत्वात्। न च द्वयोरपि हेतुत्वं गौरवात्॥ ननु तन्मतेऽपि मधुविषसंपृक्तान्नभोजने चैत्यवन्दने च प्रवृत्त्यापत्तिः कार्य्यताज्ञानसत्त्वादिति चेन्न। स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्य्यताज्ञानस्य प्रवर्त्तकत्वात्। काम्ये हि यागपाकादौ कामना स्वविशेषणं। ततश्च बलवदनिष्टाननुबन्धिकाम्यसाधनताज्ञानेन कार्य्यताज्ञानं। ततः प्रवृत्तिः। तृप्तस्य भोजने न प्रवर्त्तते। तदानीं कामनायाः पुरुषविशेषणत्वाभावात्। नित्ये च शौचादिकं पुरुषविशेषणं। तेन शौचादिज्ञानाधीनकृतिसाध्यताज्ञानात् तत्र प्रवृत्तेः॥ ननु तदपेक्षया लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनताविषयककार्य्यताज्ञानमेव हेतुरस्तु बलवदनिष्टाननुबन्धित्वञ्च इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वं बलवद्द्विष्टविषयदुःखाजनकत्वं वेति चेन्न। इष्टसाधनत्वकृतिसाध्यत्वयोर्युगपज्ज्ञातुमशक्यत्वात्। साध्यत्वसाधनत्वयोर्विरोधाद् असिद्धस्य तु साध्यत्वं सिद्धस्य च साधनत्वं। न च एकमेकेनैकदा सिद्धमसिद्धञ्च ज्ञायते। तस्मात् कालभेदादुभयं ज्ञायते। नैवं। लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताज्ञा-

सिद्धा॰ तस्य हेतुत्वात्। न च साध्यत्वसाधनत्वयोर्विरोधः। यदाकदाचित् साध्यत्वसाधनत्वयोरविरोधात्। एकदासाध्यत्वसाधनत्वयोश्चाज्ञानात्॥ नवीनास्तु ममेदं कृतिसाध्यमिति ज्ञानं न प्रवर्त्तकमनागतेष्टस्य ज्ञातुमशक्यत्वात्। किन्तु यादृशस्य पुंसः कृतिसाध्यं यदिष्टं तादृशत्वं स्वस्य प्रतिसन्धाय तत्र प्रवर्त्तते तेनौदनकामस्य तत्साधनताज्ञानवतस्तदुपकरणवतः पाकः कृतिसाध्यस्तादृशश्चाहमिति प्रतिसन्धाय पाके प्रवर्त्तत इत्याऊस्तन्न। स्वकल्पितलिप्यादिप्रवृत्तौ यौवने कामोद्भेदादिना सम्भोगादौ च तदभावात्। इदन्तु बोध्यं। तदानीमिष्टसाधनत्वादिज्ञानं प्रवर्त्तकं।तेन भावियौवराज्ये बालस्य न प्रवृत्तिः। तदानीं कृतिसाध्यत्वाज्ञानात्। एवं तृप्तो भोजने न प्रवर्त्तते। तदानीमिष्टसाधनत्वाज्ञानात्। प्रवर्त्तते च रोगदूषितचित्तो विषादिभक्षणे। तदानीं बलवदनिष्टाननुबन्धित्वज्ञानात्॥ न चास्तिकस्यागम्यागमनशत्रुबधादिप्रवृत्तौ कथं बलवदनिष्टाननुबन्धित्वबुद्धिर्नरकसाधनत्वज्ञानादिति वाच्यं। उत्कटरागादिना नरकसाधनताधीनिरोधनात्। वृष्ट्यादौ तु कृतिसाध्यताज्ञानाभावान्न चिकीर्षाप्रवृत्ती। किन्त्विष्टसाधनताज्ञानादिच्छामात्रं। कृतिश्च प्रवृत्तिरूपा बोध्या। तेन जीवनयोनियत्नसाध्ये प्राणपञ्चकसञ्चारे न प्रवृत्तिः। इत्यञ्च प्रवर्त्तकत्वानुरोधाद्विधेरपि तावानर्थः। इत्यञ्च

सिद्धा० विश्वजिता यजेत इत्यादौ यत्र फलं न श्रूयते तत्रापि स्वर्गः फलं कल्प्यते । नन्वहरहः सन्ध्यामुपासीतेत्यादौ इष्टानुत्पत्तेः प्रवृत्तिः कथं॥ न चार्थवादिकं ब्रह्मलोकादि प्रत्यवायाभावो वा फलमिति वाच्यं । तथा सति काम्यत्वे नित्यत्वहान्यापत्तेः।कामनाभावेऽकरणापत्तेश्च। इत्यश्च फलश्रुतिस्तत्रार्थवादमात्रमिति चेन्न । यहणश्राद्धादौ नित्यत्वनैमित्तिकत्वयोरिव भरणीश्राद्धे काम्यत्वनैमित्तकत्वयोरिव नित्यत्वकाम्यत्वयोरप्यविरोधात्॥ न च कामनाभावेऽकरणापत्तिः । त्रिकालस्तवपाठादाविव कामनासद्भावस्यैव कल्पनात् ॥ ननु वेदबोधितकार्य्यताज्ञानात् प्रवृत्तिः सम्भवतीति चेन्न । इष्टसाधनत्वमज्ञाय तादृशकार्य्यताज्ञानसहस्रेणापि प्रवृत्तेरसम्भवात्॥ यदपि पण्डापूर्व्वफलमिति तदपि न । कामनाभावे करणापत्तेस्तौल्यात् । कामनाकल्पने त्वार्थवादिकफलमेव रात्रिसत्रन्यायात् कल्प्यतामन्यथा प्रवृत्त्यनुपपत्तेः । तेन ।

चयं केचिदुपात्तस्य दुरितस्य प्रचक्षते ।
अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्वते ॥

एवं ।

सन्ध्यामुपासते ये तु सततं शंसितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयं ॥

एवं ।

सिद्धा॰ इयादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन्।

इत्यादिकमेव फलमस्तु॥ न च पितृप्रीतिः कथं फलं व्यधिकरणत्वादिति वाच्यं। गयाश्राद्धादाविव उद्देश्यत्वसम्बन्धेनैव फलजनकत्वस्य क्वचित् कल्पनात्। अत एवोक्तं शास्त्रदर्शितफलमनुष्ठानतो रीत्युत्सर्ग इति। पितॄणां मुक्तत्वे तु स्वस्य स्वर्गफलं यावन्नित्यनैमित्तिकानुष्ठानस्य सामान्यतः स्वर्गफलकल्पनात् षण्डापूर्व्वार्थप्रवृत्तिश्च न सम्भवति। न हि तत्सुखदुःखाभाववत् स्वतः पुरुषार्थः। न वा तत्साधनं। प्रत्यवायानुत्पत्तौ कथं प्रवृत्तिरिति चेत्। इत्थं। यथा हि नित्यकृते प्रत्यवायाभावस्तिष्ठति तदभावे तदभावः। एवं प्रत्यवायाभावस्य सत्त्वे दुःखप्रागभावसत्त्वं तदभावे तदभाव इति योगक्षेमसाधारणकारणताया दुःखप्रागभावे प्रत्यपि सुवचत्वात्। एवमेव प्रायश्चित्तस्यापि दुःखप्रागभावहेतुत्वमिति॥ ननु न कलञ्जं भक्षयेदित्यत्र विध्यर्थे कथं नञर्थान्वयः। इष्टसाधनत्वाभावस्य कृतिसाध्यत्वाभावस्य च बोधयितुमशक्यत्वादिति चेन्न। तत्र बाधादिष्टसाधनत्वं कृतिसाध्यत्वञ्च न विध्यर्थः किन्तु बलवदनिष्टाननुबन्धित्वमात्रं तदभावश्च नञा बोध्यते। अथवा बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यत्वं विध्यर्थः। तदभावश्च नञा बोध्यमानो विशिष्टाभावो विशेष्यवति विशेषणाभावे विश्राम्यति॥

सिद्धा॰ ननु श्येनेनाभिचरन् यजेतेत्यत्र कथं बलवदनिष्टाननुब-न्धित्वमर्थः। श्येनस्य मरणानुकूलव्यापारस्य हिंसात्वेन नरकसाधनत्वात्॥ न च वैधत्वान्निषेध इति वाच्यं। अभिचारे प्रायश्चित्तोपदेशात्॥ न च मरणानुकूल-व्यापारमात्रं यदि हिंसा तदा खड्गकारस्य कूपकर्त्तुश्च हिंसकत्वापत्तिर्गलग्नान्नभक्षणजन्यमरणे स्वात्मवधि-त्वापत्तिश्चेति वाच्यं। मरणोद्देश्यकत्वस्यापि विशेषण-त्वात्। अत एव मन्नमीतैलाभ्यक्तस्य न हिंसात्वं। अन्यो-द्देश्यकक्षिप्तनाराचहतब्राह्मणस्य तु वाचनिकं प्राय-श्चित्तमिति चेन्न। श्येनवारणायादृष्टाद्वारकत्वेन वि-शेषणात्। अत एव काशीमरणार्थकृतशिवपूजादेरपि न हिंसात्वं॥ न च साक्षान्मरणजनकस्यैव हिंसात्वं श्येनस्तु न तथा किन्तु तज्जन्यापूर्व्वमिति वाच्यं। खड्गाघातेन ब्राह्मणे व्रणपाकपरम्परया मृते हिंसा-त्वानापत्तेः। केचित्तु श्येनस्य हिंसाफलत्वं न तु मरणं। श्येनजन्यखड्गघातादिरूपा हिंसा अभिचारपदार्थः। तस्य च पापजनकत्वं। अतः श्येनस्य वैधत्वात् पापा-जनकत्वेऽपि अग्रिमपापं प्रतिसन्धाय सन्तो न प्रव-र्त्तन्ते॥ आचार्य्यास्तु आप्ताभिप्रायो विध्यर्थः। पाकं कुर्य्याद् इत्यादौ आज्ञानिरूपणेच्छावाचित्वात्सिद्धात्र-स्येच्छावाचित्वं लाघवात्। एवञ्च स्वर्गकामो यजेते-त्यादौ यागः स्वर्गकामकृतिसाध्यतयाऽभीष्ट इत्यर्थः। तत

भाषा॰ उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् ॥ १४९ ॥
निवृत्तिस्तु भवेद् द्वेषाद् द्विष्टसाधनताधियः।

---

सिद्धा॰ आप्तेष्टत्वेनेष्टसाधनत्वादिकमनुमाय प्रवर्त्तते। कलञ्ज-भक्षणादौ तदभावान्न प्रवर्त्तते। यस्तु वेदे पौरुषेयत्वं नाभ्युपैति तं प्रति विधिरेव तावद्गर्भ इव श्रुतिः कुमार्य्याः पुंयोगे मानं ॥ न च कर्त्तृस्मरणं बाधकं। कपिलकणादादिकमारभ्याद्यपर्य्यन्तं कर्त्तृस्मरणस्यैव प्रतीयमानत्वात्। अन्यथा स्मृतीनामप्यकर्त्तृकत्वापत्तेः। तत्रैव कर्त्तृस्मरणमस्तीति चेद्वेदेऽपि छन्दांसि जज्ञिरे तस्मादित्यादिकर्त्तृस्मरणमस्त्येव। एवं प्रति मन्वन्तरं चैषा श्रुतिरन्या विधीयत इत्यपि द्रष्टव्यं॥

स्वयम्भुरेष भगवान् वेदो गीतस्त्वया पुरा।
शिवाद्या ऋषिपर्य्यन्ताः स्मर्त्तारोऽस्य न कारकाः॥

इति वेदस्य स्तुतिमात्रं ॥ न च पौरुषेयत्वभ्रमादिसम्भवादप्रामाण्यं स्यादिति वाच्यं। नित्यसर्व्वज्ञत्वेन निर्द्दोषत्वात्। अत एव पुरुषान्तरभ्रमादिसम्भवान्न कपिलादेः कर्त्तृत्वं वेदस्य। किञ्च वर्णानामेवानित्यत्वस्य वक्ष्यमाणत्वात् सुतरां तत्सन्दर्भस्य वेदस्यानित्यत्वमिति ॥ उपादानस्येति। उपादानस्य समवायिकारणस्याध्यक्षं प्रत्यक्षं प्रवृत्तौ कारणमिति॥ १४९ ॥

द्विष्टसाधनताज्ञानस्य दुःखसाधनविषयकनिवृत्तिं

भाषा० यत्नो जीवनयोनिस्तु सर्व्वदाऽतीन्द्रियो भवेत्॥१५०॥

शरीरे प्राणसञ्चारकारणं परिकीर्त्तितं *।

अतीन्द्रियं गुरुत्वं स्यात् पृथिव्यादिद्वये तु तत्॥१५१॥

अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतं।

तदेवासमवायि स्यात् पतनाख्ये तु कर्म्मणि॥१५२॥

सांसिद्धिकद्रवत्वं स्यान्नैमित्तिकमथापरं।

---

सिद्धा० प्रति जनकत्वमन्वयव्यतिरेकादवधारितमिति भावः॥ यत्न इति। जीवनयोनियत्नो यावज्जीवनमनुवर्त्तते। स चातीन्द्रियः॥ १५०॥

तत्र प्रमाणमाह। शरीरे प्राणसञ्चारकारणं परिकीर्त्तितमिति। प्राणसञ्चारो हि अधिकः श्वासादिः प्रयत्नसाध्यः। इत्यञ्च प्राणसञ्चारस्य यत्नसाध्यत्वानुमानात् प्रत्यक्षयत्नस्य बाधादतीन्द्रिययत्नसिद्धिः। स एव जीवनयोनिप्रयत्नः॥ गुरुत्वं निरूपयति। अतीन्द्रियमिति॥ १५१॥

अनित्ये द्व्यणुकादौ तद्गुरुत्वमनित्यं। नित्ये परमाणौ नित्यं। गुरुत्वमित्यनुवर्त्तते। तद्गुरुत्वं असमवायि असमवायिकारणं। पतने आद्यपतने इत्यर्थः॥ १५२॥

द्रवत्वन्निरूपयति। सांसिद्धिकमिति। द्रवत्वं द्विविधं

---

* तत् प्रकीर्त्तितमिति पाठान्तरः।

भाषा० सांसिद्धिकन्तु सलिले द्वितीयं क्षितितेजसोः ॥ १५३ ॥
परमाणौ जले नित्यमन्यत्रानित्यमुच्यते ।
नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु ॥ १५४ ॥
द्रवत्वं स्यन्दने हेतुर्निमित्तं सङ्ग्रहेतु तत् ।
स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसो ॥ १५५ ॥
तैलान्तरे तत्प्रकर्षाद् दहनस्यानुकूलता ।

---

सिद्धा० सांसिद्धिकं नैमित्तिकञ्चेति । द्वितीयं नैमित्तिकं परमाणाविति ॥ १५३ ॥

जलपरमाणौ द्रवत्वं नित्यं । अन्यत्र पृथिवीपरमाण्वादौ जलद्व्यणुकादौ च द्रवत्वमनित्यं । कुत्रचित्तेजसि कुत्रचित् पृथिव्याञ्च नैमित्तिकं द्रवत्वं । तत्र को वा नैमित्तिकार्थस्तद्दर्शयति ॥ नैमित्तिकमिति । वह्नीति पदन्तेजोऽर्थकं । तथा च तेजःसंयोगाग्निसंयोगजन्यं नैमित्तिकं द्रवत्वं । तच्च सुवर्णादिरूपे तेजसि घृतजतुप्रभृतिपृथिव्यां वर्त्तत इत्यर्थः ॥ १५४ ॥

द्रवत्वं स्यन्दने हेतुर्निमित्तं सङ्ग्रहे तु तदिति । हेतुरिति असमवायिकारणमित्यर्थः । सङ्ग्रहे सक्तुकादिसंयोगविशेषे तद्द्रवत्वं स्नेहसहितमिति बोद्धव्यं । तेन द्रुतसुवर्णादीनां न सङ्ग्रहः ॥ स्नेहं निरूपयति । जले इति । जल एवेत्यर्थः । असो स्नेहः ॥ १५५ ॥

ननु पृथिव्यामपि तैलस्नेह उपलभ्यते । न चासैा

भाषा० संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने ॥ १५६ ॥
मूर्त्तमात्रे तु वेगः स्यात् कर्म्मजो वेगजः क्वचित् ।
स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि ॥ १५७॥
अतीन्द्रियोऽसौ विज्ञेयः क्वचित् स्पन्देऽपि कारणं ।

सिद्धा० जलीयः ॥ तथा सति दहनप्रातिकूल्यं स्यादत आह । तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलतेति । तत्प्रकर्षात् स्नेहप्रकर्षात् । तैल उपलभ्यमानस्नेहोऽपि जलीय एव । तस्य प्रकृष्टत्वादग्नेरानुकूल्यं । अपकृष्टस्नेहं हि जलं वह्निं नाशयतीति भावः ॥ संस्कारन्निरूपयति । संस्कारेति । वेगस्थितिस्थापकभावनाभेदात् संस्कारस्त्रिविध इत्यर्थः ॥ १५६ ॥

मूर्त्तमात्रे तु वेगः स्यात् कर्म्मजो वेगजः क्वचिदिति । कर्म्मजवेगजभेदाद्वेगो द्विविध इत्यर्थः । शरादौ हि नोदनजनितेन कर्म्मणा वेगो जन्यते । तेन च पूर्व्वकर्म्मनाशादुत्तरं कर्म्म । एवमग्रेऽपि । विना च वेगं कर्म्मणः कर्म्मप्रतिबन्धकत्वात् पूर्व्वकर्म्मनाश उत्तरकर्म्मोत्पत्तिश्च न स्यात् । यत्र वेगवता कपालेन जनिते घटे वेगो जन्यते स वेगजो वेगः ॥ स्थितिस्थापक इति । आकृष्टशाखादीनां कपित्यागे *पुनर्गमनस्य स्थितिस्थापकसाध्यत्वात् । केचिदिति । चतुर्षु क्षित्यादिषु स्थितिस्थापकं केचिन्मन्यन्ते तदप्रमाणमिति भावः ॥१५७॥

* परित्यागे इति पाठः ।

भाषा० भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः ॥ १५८ ॥
उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् ।
स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते ॥ १५९ ॥

---

सिद्धा० असौ स्थितिस्थापकः । क्वचिद् आकृष्टशाखादौ ॥ भावनाख्य इति ॥१५८॥

तस्य संस्कारस्य । उपेक्षात्मकज्ञानात् संस्कारानुत्पत्तेरुपेक्षानात्मक इत्युक्तं । तत्संशयात् संस्कारानुत्पत्तेर्निश्चय इत्युक्तं । तेनोपेक्षान्यनिश्चयत्वेन संस्कारं प्रति हेतुतेति भावः ॥ ननु स्मरणं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुत्वं तेनोपेक्षादिस्थले न स्मरणं इत्यस्य संस्कारं प्रति ज्ञानत्वेनैव हेतुतास्त्विति चेन्न । विनिगमनाविरहेणापि संस्कारं प्रति उपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात् । किञ्च उपेक्षास्थले संस्कारकल्पनाया गुरुत्वात् संस्कारं प्रति चोपेक्षान्यत्वेन हेतुतायाः सिद्धत्वात् ॥ तत्र प्रमाणं दर्शयति । स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते इति । असौ संस्कारः स्मरणं प्रत्यभिज्ञानञ्च जनयति । अतः संस्कारः कल्प्यते । विना व्यापारं पूर्व्वानुभवस्य स्मरणादिजननासामर्थ्यात् । स्वस्वव्यापारान्यतराभावे कारणत्वासम्भवात् ॥ न च प्रत्यभिज्ञां प्रति तत्तासंस्कारस्य हेतुत्वेन प्रत्यभिज्ञायाः संस्कारजन्यत्वेन स्मृतित्वापत्तिरिति वाच्यं ।

भाषा० धर्म्माधर्म्मावदृष्टं स्याद् धर्म्मः स्वर्गादिसाधनं।
गङ्गास्नानादि यागादि व्यापारः परिकीर्त्तितः॥१६०॥

---

सिद्धा० अप्रयोजकत्वात्। परे तु अनुद्बुद्धसंस्कारात् प्रत्यभिज्ञानुदयादुद्बुद्धसंस्कारस्य हेतुत्वापेक्षया तत्तत्सा-रणस्यैव प्रत्यभिज्ञां प्रति हेतुत्वं कल्प्यत इत्याहुः॥ १५८॥

अदृष्टं निरूपयति। धर्म्माधर्म्माविति। स्वर्गादिफलसुखानां स्वर्गसाधनीभूतशरीरादीनाञ्च साधनं धर्म्म इत्यर्थः॥ तत्र प्रमाणं दर्शयितुमाह। यागादीति। यागादिव्यापारतया हि धर्म्मः कल्प्यते। अन्यथा यागादीनां चिरं विनष्टतया निर्व्यापारतया च कालान्तरभाविस्वर्गजनकत्वं न स्यात् तदुक्तमाचार्य्यैः।

चिरध्वस्तं फलायालं न कर्म्मातिशयं विना इति॥

ननु यागध्वंस एव व्यापारः स्यान् न प्रतियोगितद्ध्वंसयोरेकत्राजनकत्वं। सर्व्वत्र तथात्वे मानाभावात्॥ न च तन्नाशे फलानन्त्यं तन्नाशे चरमफलस्यापूर्व्वनाशकत्वान्न तथात्वमिति वाच्यं। कालविशेषस्य सहकारित्वाद् इत्यत आह। गङ्गास्नानेति। गङ्गास्नानस्य हि स्वर्गजनकत्वेऽनन्तानां जलसंयोगध्वंसानां व्यापारत्वमपेक्ष्यैकमपूर्व्वं कल्प्यते लाघवादिति भावः॥ १६०॥

भाषा० कर्म्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः ।
अधर्म्मो नरकादीनां हेतुर्निन्दितकर्म्मजः ॥ १६१ ॥
प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ ।

---

सिद्धा० ननु ध्वंसोऽपि न व्यापारोऽस्तु ॥ न च निर्व्यापारस्य चिरध्वस्तस्य कथं कारणत्वमिति वाच्यं । अनन्यथासिद्धनियतपूर्व्ववर्त्तित्वस्य तत्रापि सत्त्वात् । अव्यवहितपूर्व्ववर्त्तित्वं हि चक्षुःसंयोगादेः कारणत्वं न तु सर्व्वत्र कार्य्यकालवृत्तित्वमिव समवायिकारणस्य कारणत्वमित्यत आह । कर्मनाशाजलस्पर्शादिना नाशस्त्वसौ मत इति । यदि हि अपूर्व्वं न स्यात् तदा कर्म्मनाशाजलस्पर्शादिना नाश्यत्वं धर्म्मस्य न स्यात् । न हि तेन यागादिनाशः प्रतिबन्धो वा कर्त्तुं शक्यते । तस्य पूर्व्वमेव वृत्तत्वादिति ॥ एतेन देवताप्रीतिरेव फलमित्यपास्तं । गङ्गास्नानादौ सर्व्वत्र देवताप्रीतेरसम्भवात् । देवतायाश्चेतनत्वेऽपि तत्प्रीतेरनुद्देश्यत्वात् । प्रीतेः सुखस्वरूपत्वेन विष्णुप्रीत्यादौ तदसम्भवात् । जन्यसुखादेस्तत्राभावात् । तेन विष्णुप्रीतिजन्यत्वेन पराभिमतस्वर्गादिरेव विष्णुप्रीतिशब्देन लक्ष्यते ॥ अधर्म्मो नरकादीनां हेतुर्निन्दितकर्म्मज इति । नरकदुःखादिसकलदुःखानां नारकिशरीरादीनाञ्च साधनमधर्म्म इत्यर्थः ॥ १६१ ॥

प्रमाणमाह । प्रायश्चित्तादिनाश्योऽसौ । जीववृत्ती

भाषा० इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः ॥ १६२ ॥

सिद्धा० त्विमौ गुणाविति । यदि ज्ञाधर्मौ न स्यात् तदा प्रायश्चित्तादिनाश्यत्वं न स्यात् । न हि तेन ब्रह्महन-नादीनां नाशः प्रतिबन्धो वा विधातुं शक्यते । तस्य पूर्व्वविनष्टत्वादिति भावः । जीवेति । ईश्वरस्य धर्मा-धर्माभावादिति भावः ॥ इमौ तु वासनाजन्यौ ज्ञा-नादपि विनश्यत इति । इमौ धर्माधर्मौ । वास-नेति । अतो ज्ञानिना कृते सुकृतदुष्कृतकर्म्मणी न फलायालमिति भावः । ज्ञानादपीत्यपिना भोग-परिग्रहः ॥ ननु तत्त्वज्ञानस्य कथं धर्माधर्म्मना-शकत्वं । नाभुक्तं चीयते कर्म कल्पकोटिशतैरपीति वच-नविरोधात् । इत्थञ्च तत्त्वज्ञानिना झटिति काय-व्यूहेन सकलकर्म्मणां भोगेन चय इति चेन्न । तत्र भो-गस्य वेदबोधितनाशकोपलक्षितत्वात् । कथमन्यथा प्रा-यश्चित्तादिना कर्म्मणां नाशः । तदुक्तं । ज्ञानाग्निः सर्व्वकर्म्माणीत्यादिना । श्रूयते च । चीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे इति ॥ ननु तत्त्वज्ञानिनस्तर्हि शरीरावस्थानं सुखदुःखादि च न स्यात् ज्ञानेन च सर्व्वेषां कर्म्मणां नाशादिति चेन्न । प्रारब्धेतरकर्म्मणामेव नाशात् । तत्तच्छरीरभोगजनकं हि यत्कर्म्म तत् प्रारब्धं तदभिप्रायमेव नाभुक्तमिति वचनमिति ॥ १६२ ॥

भाषा० शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः।
कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः ॥ १६३ ॥
सर्व्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते।
वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता ॥ १६४ ॥
कदम्बकोरक*न्यायादुत्पत्तिः कस्यचिन्मते।
उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता ॥ १६५ ॥

---

सिद्धा० शब्दं निरूपयति। शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः। कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः॥ सर्व्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते इति॥ नभोवृत्तिराकाशसमवेतः॥ दूरस्थशब्दस्याग्रहणादाह। श्रोत्रेति॥ ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरत आह। वीचितरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तितेति। आद्यशब्दस्य बहिर्दशदिगवच्छिन्नोऽन्यः शब्दस्तेनैव शब्देन जन्यते। तेन चापरस्तज्ञापकः। एवं क्रमेण श्रोत्रोत्पन्नो गृह्यत इति॥ १६३॥ १६४॥

कदम्बकोरकन्यायादुत्पत्तिः कस्यचिन्मते इति। आद्यशब्दाद् दशदिक्षु दशशब्दा उत्पद्यन्ते। ततश्चान्ये दशशब्दा उत्पद्यन्त इति भावः। अस्मिन् कल्पे गौरवादुक्तं कस्यचिन्मते इति॥ ननु शब्दस्य नित्यत्वादुत्पत्तिः कथ-

---

* कदम्बगोलकेति पाठान्तरं॥

भाषा० सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते ।
तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ॥ १६६ ॥

इति श्रीमहामहोपाध्यायविद्यानिवासभट्टाचार्य्यसुत-श्रीयुतविश्वनाथपञ्चाननभट्टाचार्य्यविरचितो भाषापरिच्छेदः समाप्तः ॥ * ॥

---

सिद्धा० मत आह । उत्पन्नः को विनष्टः क इति बुद्धेरनित्यतेति । शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः ॥ १६५ ॥

ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां नित्यत्वं । इत्थं चोत्पादविनाशबुद्धिभ्रमरूपा चेत्यत आह । सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते । तदेवौषधमित्यादौ सजातीयेऽपि दर्शनादिति । तच प्रत्यभिज्ञानस्य तत्सजातीयत्वं विषयो न तु तद्व्यक्त्यभेदो विषयः । उक्तप्रतीतिविरोधात् । इत्थञ्च द्वयोरपि बुद्धोर्न भ्रमत्वमिति ॥ ननु सजातीयत्वं सोऽयमितिप्रत्यभिज्ञायां भासते इति कुत्र दृष्टमित्यत आह । तदेवेति । यदौषधं मया कृतं तदेवान्येनापि कृतमित्यादिदर्शनादिति भावः ॥ १६६ ॥

इति श्रीमहामहोपाध्यायविद्यानिवासभट्टाचार्य्यपुत्रश्रीयुतविश्वनाथपञ्चाननभट्टाचार्य्यविरचिता सिद्धान्तमुक्तावली संपूर्णा ॥ * ॥

# भाषापरिच्छेदस्य शुद्धिपत्रं ।

| पृष्ठाङ्क | पङ्क्त्यङ्क | अशुद्ध | शुद्ध |
|---|---|---|---|
| २ | २० | यविप्रध्वस | विप्रध्वंस |
| १२ | ४ | समवायिकारणत्व | समवायिकारणत्वं |
| १३ | १ | जनक | जनकं |
| १६ | ३ | गुणकर्म्ममात्त | गुणकर्म्ममात्र |
| ४० | १२।१३ | प्रत्तोत्याप्यदि | प्रत्तोत्यादि |
| ४६ | १ | गाचरो | गोचरो |
| ४६ | ४ | द्रव्यत्व | द्रवत्वं |
| ४९ | २० | वैशिष्ट्र | वैशिष्ट्य |
| ५९ | ८ | प्रत्प्रर्चा | प्रत्यर्चां |
| ६५ | १ | वाध्यं | बोध्यं |
| ७८ | २१ | पदतन्या | पदजन्य |
| ८८ | १२ | दराडत्वोः | दण्डत्वोः |
| ८९ | १८ | नैवोपत्तेः | नैवोपपत्तेः |
| ९६ | १२ | द्रव्यत्वं | द्रवत्वं |
| ९८ | २१ | दित्यदि | दित्वादि |
| ११० | १ | पृथक्त्व | पृथक्त्वं |
| १११ | २१ | पाटलीपुत्राव | पाटलीपुत्रात् |
| १२० | ३४ | क्वचित् | क्वचित् |
| १२८ | ७ | बह्मभावेम | बह्मभावेन |
| १३३ | २ | कदाचित | कदाचित् |
| १४२ | १ | साधन | साधनं |
| १४३ | १ | नाप्रस्त्वसा | नाप्रस्त्वसो |

# भाषापरिच्छेदस्य निर्घण्टपत्रं।


| प्रकरणं | पत्राङ्क | पङ्क्त्यङ्क |
|---|---|---|
| मङ्गलाचरणं | १ | ४ |
| पदार्थोद्देशकथनं | ३ | १ |
| द्रव्यविभागः | ४ | २ |
| गुणविभागः | ५ | १ |
| कर्म्मविभागः | ५ | ६ |
| सामान्यनिरूपणं | ६ | २ |
| विशेषनिरूपणं | ७ | ३ |
| समवायपरिचयः | ७ | ४ |
| अभावविभागः | ८ | २ |
| इति पदार्थविभागकथनं प्रथमभागः। | | |
| सप्तपदार्थानां साधर्म्म्यवैधर्म्म्यकथनं | १० | २ |
| कारणलक्षणं | १२ | १ |
| कारणविभागः | १२ | ३ |
| अन्यथासिद्धिलक्षणविभागौ | १३ | ३ |
| द्रव्यस्यैव समवायिकारणत्वकथनं | १६ | २ |
| असमवायिकारणस्य गुणकर्म्ममात्रवृत्तित्वं | १६ | ३ |
| नित्यद्रव्यभिन्नानामाश्रितत्वकथनं | १६ | ४ |
| इति सप्तपदार्थानां साधर्म्म्यादिकथनं द्वितीयभागः। | | |
| पृथिवीनिरूपणं | २१ | ११ |
| पृथिवीविभागः | २५ | १ |
| देहेन्द्रियविषयकथनं | २५ | २ |
| जलनिरूपणं | २७ | १ |
| तेजोनिरूपणं | ३० | २ |
| वायुनिरूपणं | ३२ | १ |

| प्रक॰ | पृ॰ | पं॰ |
|---|---|---|
| आकाशनिरूपणं | ३४ | १ |
| कालनिरूपणं | ३५ | १ |
| दिङ्निरूपणं | ३६ | १ |
| आत्मनिरूपणं | ३७ | १ |
| अनुभूतिस्मृतिभेदेन बुद्धेर्द्वैविध्यकथनं | ४४ | २ |
| अनुभूतिविभागः प्रत्यक्षादिप्रमाणकथनं च | ४४ | ४ |
| प्रत्यक्षविभागः | ४५ | १ |
| द्रव्याध्यक्षे त्वङ्मनःसंयोगस्य कारणत्वं | ४८ | २ |
| सुखदुःखादीनां मनोग्राह्यत्वं | ४९ | १ |
| निर्विकल्पज्ञानस्यातीन्द्रियत्वकथनं | ४९ | २ |
| सामान्यलक्षणादिभेदेनालौकिकसन्निकर्षस्य भेदत्रयकथनं | ५५ | २ |
| अनुमित्युत्पादनं | ५९ | २ |
| परामर्शलक्षणं | ६० | २ |
| व्याप्तिलक्षणं | ६१ | १ |
| पक्षलक्षणं | ६८ | १ |
| हेत्वाभासविभागः | ७० | १ |
| उपमित्युत्पादनं | ७८ | १ |
| शाब्दबोधप्रकारपरिचयः | ७८ | ५ |
| शाब्दबोधकारणकथनं | ८८ | १ |
| आसत्तिलक्षणं | ८८ | २ |
| योग्यतानिर्वचनं | ९० | १ |
| आकाङ्क्षानिर्वचनं | ९० | २ |
| तात्पर्यनिर्वचनं | ९१ | १ |
| मनोनिरूपणं | ९२ | १ |
| मनोऽणुत्वप्रमाणं | ९३ | २ |


इति पृथिव्यादिद्रव्यपदार्थनिरूपणं तृतीयभागः।


| | | |
|---|---|---|
| गुणनिरूपणं | ९४ | १ |
| मूर्त्तगुणकथनं | ९५ | १ |
| अमूर्त्तगुणकथनं | ९५ | २ |

| प्रक० | पृ० | पं० |
|---|---|---|
| मूर्त्तामूर्त्तगुणकथनं | ६५ | ५ |
| विशेषगुणकथनं | ६६ | १ |
| सामान्यगुणकथनं | ६६ | ३ |
| विभुविशेषगुणानामतीन्द्रियत्वादिकथनं | ६६ | ८ |
| रूपस्य प्रत्यक्षे कारणत्वं | ६८ | २ |
| रसनिरूपणं | १०० | २ |
| गन्धनिरूपणं | १०१ | २ |
| स्पर्शनिरूपणं | १०१ | ४ |
| रूपादिस्पर्शान्तानां पाकजत्वकथनं | १०२ | १ |
| सङ्ख्यानिरूपणं | १०६ | १ |
| परिमाणनिरूपणं | १०८ | १ |
| पृथक्त्वनिरूपणं | ११० | १ |
| संयोगनिरूपणं | १११ | ३ |
| परत्वापरत्वनिरूपणं | ११३ | १ |
| बुद्धिनिरूपणं | ११४ | ६ |
| अप्रमाविभागः | ११४ | ८ |
| संशयलक्षणं | ११५ | ४ |
| संशयकारणकथनं | ११६ | १ |
| अप्रमाकारणकथनं | ११६ | १ |
| प्रत्यक्षादौ गुणपरिचयः | ११७ | २ |
| प्रमानिरूपणं | ११७ | ८ |
| व्याप्तिग्रहोपायकथनं | १२२ | १ |
| परकीयव्याप्तिग्रहप्रतिबन्धार्थमुपाधिनिरूपणं | १२३ | १ |
| उपाधेर्दूषकतावीजकथनं | १२४ | ४ |
| अनुमानविभागः | १२६ | २ |
| सुखनिरूपणं | १२९ | ३ |
| दुःखनिरूपणं | १२९ | ४ |
| इच्छाकथनं | १३० | १ |
| द्वेषकथनं | १३१ | १ |
| यत्ननिरूपणविभागौ | १३१ | २।३ |

| प्रक० | पृ० | पं० |
| --- | --- | --- |
| गुरुत्वकथनं | १३८ | ३ |
| द्रवत्वनिरूपणविभागौ | १३८ | ६ |
| स्नेहनिरूपणं | १३९ | ५ |
| संस्कारनिरूपणविभागौ | १४० | १ |
| अदृष्टनिरूपणं | १४२ | १ |
| शब्दनिरूपणविभागौ | १४५ | १ |


इति गुणपदार्थनिरूपणं चतुर्थभागः ॥

इति भाषापरिच्छेदनिर्घण्टपत्रं सम्पूर्णं ॥

---

# INTRODUCTION.

In the following introduction to a translation of the Bháshá Paricchéda,* one of the most celebrated works of the Nyáya philosophy, it has been my endeavour to subject the logic of the Nyáya, as well as the leading ideas of this and the Vaiséshika systems, to a critical review, in order to bring the discussion about the merits of the philosophical researches of the Hindus more to a point. Colebrooke's exposition of those systems, though founded on the ablest and most exact researches, as well in a philosophical as in a critical point of view, does not suffice for this purpose, as it is a mere abstract from the works of those schools, and does not enter upon the discussion of the position they are to hold as systems of philosophy.

It is well known, how difficult it is to write a history of ancient India, only a few strictly historical records having been left to us by the Hindus themselves. The same difficulty obtains with regard to the history of their philosophy, as in the mind of the Hindus philosophy was associated with the idea of being raised above change, and no regard therefore paid to the social and intellectual condition of the time, in which lived the founder of a system or his successors who more

* I have translated Bháshá, in deviation from its ordinary sense "speech," by "categories of the Nyáya philosophy;" for Bháshá means here evidently not "speech" in general, which would give no sense whatever, but "Nyáya Bháshá," speech in the Nyáya, that is to say the philosophical language or terms of the Nyáya. In the Sabda Kalpa Druma, "Bháshá" (under the head of Bháshá Paricchéda) has the meaning of Paribháshá, which is explained by the authoritative language of the teachers which considers the meanings of the words (Padártha). This sense agrees essentially with the rendering which I have given.

eveloped it. Still it is not impossible to write a history of Indian hilosophy, if it be limited to the task of tracing the gradual developient of philosophical principles and modes of thinking, without ference to a strict chronological order; for the internal nature of a octrine will point out its more ancient or modern date. At the same me we must admit, that even in this attempt, we can only partially icceed. The doctrines even of those who are considered as the founders f the different schools, bear the marks of a far advanced progress in ystematical arrangement, and must therefore have been the result of a ong series of preceding philosophical enquiries.* Hence it would be reposterous to expect, that we should be able to discover the first steps f their researches. We, however, decline here embarking upon a istorical research of such a kind, believing, that under the present ircumstances, when only so few of their philosophical works have

* Lassen's Indische Alterthumskunde, vol. ii. p. 477. His (Páṇini's) text-book ontinued to be the norm of the whole following time, and the labours of his sucessors were limited to the task to narrow or amplify his rules or more lucidly to rrange them. From his work the same effect results, as from other pursuits of e Hindus on the field of science. By a person of superior talent the labours of is predecessors were rendered more perfect and brought to a close; he united them a system of rules, or Sútras, which he condensed as much as possible. This exosition remained the standard of all later times, and formed the foundation for the icceeding teachers of the same science, whose efforts were in general directed to e correct explanation and elucidation as well as to the emendation and perfection f the fundamental work, and by whom the science was carried to a higher degree nly as to its extent, but not as to its contents. We may discover a double motive, om which this manner of exposition took its rise. First, the sum total of the esults which had been gained, should be condensed in the shortest form and hence he learning by rote facilitated..... Secondly, this mode of exposition rendered the nderstanding of the text difficult and often impossible, unless it was accompanied y an explanation. Such an explanation was at the disposal of the teachers, and by heir guidance alone the pupils were able to comprehend the obscure sense of the ext-books. The Bráhmans, the only possessors of the sciences, thus secured for hemselves the privilege of communicating them only to those whom they thought orthy of this information, and of preventing the other castes from an initiation with hem. It is only in this sense that a secret doctrine of the Bráhmans can be adiitted. From the circumstance, that for each single science text-books of this kind ere generally acknowledged as standards, it was a consequence, that the works of he first founders and of the predecessors of the person who brought a science to erfection, were forgotten and frequently lost.

been published, and in general so many more materials are required for the task than we can boast to possess, it is more important to place an original work of Hindu philosophy before the public, and to examine the principles under which it has been constructed. For this end we consider the Nyáya in that shape, which it has acquired by its amalgamation with the doctrines of the Vaiśéshika, since we are of Colebrooke's opinion, that both sprang from the same root, and are but branches of the same school; the one being directed more to the explanation of material, the other of logical forms.* Or to state it more exactly,—to the Nyáya belong the logical doctrines of the forms of syllogisms, terms and propositions; to the Vaiśéshika the systematical explanation of the categories (the simplest metaphysical ideas) of the metaphysical, physical, and psychical notions, which notions are hardly touched upon in Goutama's (the supposed founder of the Nyáya) Sútras. They differ in their statement of the several modes of proof; the Nyáya asserting four modes of proof—from perception, inference, analogy, and verbal communication; the Vaiśéshika admitting only the two first ones.†

The name of logic, usually applied to the Nyáya, does not correctly define it. It does not treat of the theory of syllogisms and the notions connected with them, as its direct object, but only as a component part of its investigation. It rather aspires to the distinction of giving a complete system of philosophy, based upon the most elementary metaphysical notions, and the division dedicated to the explanation of syllogistical forms, is not even more explicitly treated than other parts of the system. To call the Nyáya logic, would be the same as to assign this name to the philosophy of Aristotle. There is no doubt, however, that the Nyáya has first among the philosophical systems of the Hindus thoroughly examined the art of reasoning, and shaped it into its present form. Hence it gained such ascendancy among the learned Hindus, that all of them, however they may deviate from other doctrines of the Nyáya, refer to it as to their standard in logic, and deem its study necessary for the purpose of giving a firm basis to their reasoning.

* Vid. Colebrooke's Miscell. Essays, Vol. i. p. 261.

† The view above given, was based upon the Sútras of Gautama, without a reference to a work of the Vaiśéshika school. I have since compared the Sútras of Kaṇáda and found my view completely confirmed.

It is indeed one of the principal merits of the Nyáya, that its progress is marked by an admirably exact division of the topics, treated in it, and in this respect it is not only superior to all other systems of the Hindus, but even modern philosophy might, with advantage, study it on account of its clearness and exactness. Though none of its investigations has been carried on to a satisfactory end, the Nyáya has, with the means at its command, fully described the circle within which it moved. We must at the same time admit, that notwithstanding its exactness, there is one inherent fault in its exposition, viz. the neglect of all analytical method, a fault of all systems of the Hindus, which has, perhaps, more than any thing else, contributed to the narrow limits of their mental horizon. This fault, which, however, it shares with many other expositions of philosophy, for instance, to mention a celebrated name, with Spinoza's system, is rather a fault of exposition than of the system itself; for no synthesis (in science) is possible without analysis, and having well understood the leading notions of a system, we can easily trace the analytical way by which they were obtained. This apparent absence of analysis in the construction of the philosophical systems of the Hindus is the reason why so many enquirers have done injustice to their philosophical talent. For want of a clear analysis, unable to understand the aphorisms of the Hindu schools, composed in a language in form as well as in thought, foreign to them, they thought the philosophical productions of many centuries and of an ingenious people, a web of either abstruse or puerile notions. On a closer examination we shall come to a juster opinion of them, and although we find a limit as well in the range as the depth of their enquiries, we shall come to place them among the nations which advanced the intellectual progress of mankind.

That Hindu philosophy will, however, have any great influence upon the development of European philosophy and mediately of European civilization, must be denied. Why should this be the case? Although we must admit, that the philosophical researches of the Hindus are as worthy of attention as those of the Greeks, still it is at the first glance evident, that the philosophical works of the former are unfit to be transferred to another soil, while those of the latter will have always the same influence upon every rising generation in every clime and age. This difference lies not so much in the development of the system

as in the form. You are compelled to think by reading the works of the Greeks, they introduce you into the process of their thoughts, and by this force you to accompany them with your own thoughts, until you arrive as it were by your own mind at the principles of their systems, from which point it is easy either to look back upon the way you have made or to advance further. The Hindus, on the other hand, are dogmatical. They commence synthetically with a statement of their principles, yet do not condescend to unfold the train of thought which has led to them. Hence it is impossible for any one to understand their writings who has not previously, to a considerable degree, been practised in philosophical enquiries. The punishment however of this mystery and exclusion is the want of interest, felt in the study of their writings. The same doctrines which might have been instrumental in enlightening thousands, are now forgotten, or in the possession of a few who are hardly able to comprehend them.

Among the general metaphysical notions, the notion of substance is the most important one, as upon it all other notions are either founded or are closely connected with it, and whatever may be the solution of all other metaphysical problems, it must be influenced by the notion of substance.

Substances are, according to the Nyáya, the substrata of qualities and actions,* a definition, which is the right one, as *the basis of further investigation*—it is the right one, because founded on experience. Substance, we add, is in so far the substratum of qualities and actions, as the existence of qualities and actions depends upon the existence of substance; if quality were independent of another, it could not represent another, whose quality it is. The existence of substance must therefore be absolute, that is to say, not dependent upon the existence of another; for in this case, it would be comprehended, not by the notion of substance, but by that of quality. And consequently, to think the idea of substance by any notions including dependance, is a contradiction. This contradiction (of comprehending substance under the notion of quality, and therefore of dependance) was committed by the Nyáya by the distinction between eternal and non-eternal substances, because the

* Or rather of qualities alone according to the modern school of the Nyáya. The definition, that substances are the substrata of qualities and actions, belongs to Kaṇáda.

existence of the latter is not independent. In the notion of eternal substance, however, the true notion of substance is included, which is to be independent of time and cause.

Another question is, how a substance is united with its qualities? That a substance should have qualities, appears a matter of course, and to question it, shows a vast progress in metaphysical thinking. Although the Nyáya entered not expressly into the discussion of this subject, it must have felt its weight, as they found it necessary to invent a contrivance for such a connexion. A substance is, according to them, united with its qualities by a relation, called intimate relation, which is something real, and is neither in substances, nor qualities, nor actions. We do not intend here to analyze this notion any further (stating, however, that the difficulty is not really removed by it,*) but we turn to a third point in the notion of substance. Substance, according to the Nyáya, is not only united with its qualities by the relation, just mentioned, but all substances are united with the general notion of substance, and single substances in the same way with the notion of their own class. This general notion is rather a common property; for it does exist, independent of the mind which may conceive it, in the substances (also in qualities and actions) themselves, and is even eternal in eternal substances, not eternal in transient substances. This notion exactly corresponds with that of the so-called realists among the scholastic philosophers, who maintained the reality of general notions. Duns Scotus, for instance, asserted, that general properties (notions) were not only in objects *potentiâ*, but *actâ*, and that generality was not only formed by the understanding, but that it existed previously to the mental conception *per se* as a reality, viz., the quiddity itself, which was

* For if it is necessary, that qualities require some link to unite them with substances, it is also necessary, that this link should be united with them by a similar link, and so on. The difficulty, as regards the connection of qualities, is briefly stated, thus. The existence of qualities is dependent upon the existence of the substance, whose qualities they are, but not vice versâ. Substance in accordance to its notion, is independent of qualities. Substance therefore is something of itself, and also something on which qualities are dependent, and in this latter respect it is not substance, which is to be independent of qualities. That is to say, the notion of substance in this form is contradictory, and should be abandoned for a notion which is consistent.

indifferent to general or individual existence. A cause, however, was required to remove this indifference, viz. another more extensive quiddity, closely united with the first, and with the principle of individuity. (afterwards called haecceity.)*

In one point the Nyáya went a step in advance of most of the ancient systems of philosophy, viz., in its assumption, that the special qualities of substances are effects; for instance earth is the intimate (or material) cause of smell, the soul of knowledge, &c. They were no doubt urged to this assumption by the contradiction, which arises, if beside substance, a quality which is necessary and therefore belongs to the quale of the substance, is admitted. If quality is an effect of substance, its existence is evidently derived, and the contradiction removed. Although, however, this hypothesis is a step in advance, it is not the complete solution of the difficulty; for here again the question will arise, how it is possible, that a substance can become a cause, that is, produce something, which is foreign to itself.

Substances, as before said, according to the Nyáya, are either eternal or non-eternal. Eternal are space, time, ether, soul, and the atoms of mind, earth, water, fire, and air. Non-eternal are all compounds, or the things which we actually perceive, and which must have a cause of their existence. Thus substances are divided into those which are without cause, and those which have a cause.

There are three causes;—1. The cause of intimate relation, or material cause, as yarn is the material cause of cloth;—2. The proximate cause, or the actual union of the parts which are to form a compound; —and 3. The instrumental cause, viz. the cause by which this union is effected.

This is similar to the doctrine of Aristotle, who admitted four causes; a material cause, a moving cause, a formal cause, and an end cause. The instrumental cause includes Arisotle's formal, moving, and end causes.

The notion of causality is certainly well considered, and infinitely superior to the notions which other Indian systems formed of it; for there are already made some steps in advance towards the proper discussion of this notion, if a difference in causes is acknowledged. In the enumeration of causes—the cause of motion appears to have been omitted; it is,

* Vid. Tennemann's Geschichte der Philosophie, Vierte Aufl. p. 256.

however, contained in the notion of instrumental causality. All activity according to the Nyáya is limited to motion, acts of the mind being considered by them as qualities, and as all actions abide in substances, we must think every substance as a cause of motion (viz. the last cause). They did not, however, discuss, whether motion was necessary to all substances, or only to some or to one, that is to say, whether there is a *primum mobile* or not; they did not discuss the question, whether or not different motions require different causes; nor did they lastly enter into an explanation of the notion itself.* They appear in fact not to have been aware of the intrinsic difficulties of the idea of causality, which undoubtedly is one of the most difficult metaphysical notions.† The contradictions in the notion of cause and effect appear with special force to apply to such causes, by which a change in the qualities of a substance is effected, as chemical, animal, and psychical effects. Such effects are, however, denied by the Nyáya. Material causes must be understood as only the substrata, or the materials for a new union, as for instance, the two halves from which a pot is produced, are the material cause of the pot. There are therefore no real changes, but only changes of the accidental form, which substances may assume in their connexion with others; and there should not be changes at all we add. Every compound substance, according to the Nyáya, is ultimately produced from simple substances. Simple substances, however, are eternal, and all their qualities are also eternal. If this is the case, there is also

* The contradictions which Zeno found in the idea of motion, are well known, and without fully acknowledging their weight, it is impossible to obtain a correct notion of it. Aristotle was well aware of this, and endeavoured to remove Zeno's objections to this notion. How important it is, correctly to define this notion, is evident even from the influence, which it exercised on the Nyáya, where motion is considered as an *act*, and even as the only act.

† Vide Sext. Emp. Adv. mathem. in Ritter's History of Philos. Vol. iv. p. 339. That cause could not be later then effect, is evident; but also the effect cannot be later than the cause; for if so, the cause, being antecedent to the effect, would be without effect, and a cause without effect, is a contradiction. And if the effect would be consequent to the cause, it would be, when the cause is no more, therefore an effect without cause. Both therefore must be necessarily together. If this be conceded, then there is the difficulty, why the one more than the other is producing (or cause). These are only part of the difficulties, and without solving them, the objections made against causality, are quite just.

no change of qualities in any compound substances, because by any connexion between them, different from an accidental relation, they would assume changes, contradictory to the notion, under which they are conceived. As the Nyáya, however, admits an actual change in compound substances, in which qualities, not to be met with in the simple substances, are produced, and moreover admits a compound, in which there is a comparatively firm connexion of the parts with each other, it has deviated from its notion of causality, and is hence guilty of the contradiction which it first endeavoured to escape. Notwithstanding these deficiencies of the Nyáya, we still maintain, that it approached nearer than any other Hindu system, to the true notion of causality, causality being, according to Pantheistic, not less than to skeptical idea, a product of habit in the association of our ideas.

In passing from the general metaphysical (ontological) to more special investigations (comprehending natural philosophy and psychology), we may first observe, that the same clearness obtains in the latter as in the former. Existence, or rather that which exists (το ὄντως ὄν, in its connexion with material and immaterial phenomena, is much more distinctly conceived than in other systems of the Hindus. We find indeed the same material elements as in the latter; viz., earth, water, light, air, and ether, and also the same qualities; but while in all others they are only generally described, here there is made an attempt to explain the special phenomena as well as the sources of our perception of them, or in one word, we find here the basis of observation, and of the first lineaments of the consequent reflection upon the results of that observation. We meet here also with the first remarks about space and time, and even with some correct notions of their nature, and although both of them are placed among the substances, we must not forget the intrinsic difficulties of this subject, which in our times only has been more satisfactorily investigated by Kant, Fichte, and Herbart. The error of considering space and time as substances, is a consequence of the notion the Nyáya had formed of substance, viz. as the substrate of qualities and actions. This idea would, indeed, have been correct, had the notion of existence been preserved. The Védánta certainly had a much more exact idea of existence, maintaining, that which exists (το ὄντως ὄν) must be simply existent, without any attribute whatever, and should strictly not be even considered by a plurality of notions. The Védánta,

however, by denying the reality of pheunomena, had nothing to explain; while the Nyáya, retaining the crude notions, given by observation, had no principles whereby to explain them. The most interesting point in this part of the system is the investigation into the nature of matter, an investigation which was indeed entered into by other Hindu systems, yet not with the same success. The Védánta, for instance, reduced the objects of the senses, or the things composed of the gross elements, to elements which are finer and imperceptible to the senses, undoubtedly for the same reasons as the Nyáya, viz. because the origin, the changes, and the destruction of the material things compelled the mind to fix the notion of existence upon some other natures, not affected by those conditions. But according to the Védánta, the simpler elements are only simple, because they are unmixed with others. As regards space, however, no reduction was made, and their view on this point is very like the doctrine of Anaxagoras, who also started from an original identity of the elements with space. The Védánta indeed did not confine its thoughts to those elements, but proceeded to the supposition of a substance, in which there is no difference whatever, but for what reason this supposition was here made, it would be difficult to give a satisfactory reply, and as regards the principal point, space filled out by matter, it was not even touched upon. The Nyáya, on the other hand, has examined matter under this point of view, and arrived at the theory of atoms,* in the same way as Leucippus and Democritus. It proceeded even further. With Leucippus and Democritus atoms have some, though imperceptible, extent, and also different figures and mo-

* It is astonishing, that the Nyáyaikas made the supposition of such a substance as the ether, which, like space and time, is pervading and infinite. It is not space itself, but a kind of matter, filling out space, and can therefore be distinguished from it merely by a less degree of density. If so, the consequence should have been, that it was also composed of parts, the last elements of which are atoms. Instead of this, ether is some thing analogous to space, by its being infinite, and yet filling out an infinite space. In fact it appears, they assumed this notion of ether only historically, or as a part of the views on matter which had been formed previously to them. The doctrine of the five elements (ether, air, fire, water and earth) is one of the most ancient hypotheses of Indian philosophy. It is taught already in the Upanishads, and probably more ancient even than the doctrine of the soul. Hence it passed over into the different systems, viz. the Védánta, Sánkhyà and Nyáya, modified according to the different views they held of substance.

tions, while the Nyáya held them to be absolute units of space, without any dimensions and motions, that is, mathematical points as regards space. They are eternal and unchangeable, and while they are without cause themselves, they are the cause of the material universe. They are imperceptible to the senses, and the knowledge of them is obtained by inference.

The system of Democritus is throughout a crude materialism. The last elements of existence are with him atoms which have no qualities whatever beside form and motion. The soul itself is merely a compound of round atoms, and a deity is of course impossible. A theory of atoms of such a kind is contradictory in its principle, and in its results lends to an annihilation of truth in general. The Nyáya is vastly superior to Democritus' theory; for atoms are first conceived in their real notion as units of matter without any extent, and secondly the theory of atoms forms only a subordinate part of their researches.

The same clearness and to a certain degree comprehensiveness is met with in their psychological enquiries. The faculties of the soul and its relations to the material things and other objects of knowledge, are methodically described. The Nyáya draws a marked line between matter and spirit, by distinctly stating the notions, under which either is perceived.

The soul has, according to the Nyáya, qualities, opposite to the qualities of the substances perceived by the senses, and is therefore distinct from these substances, that is to say, as regards special qualities; for as to qualities, ascribed to substances as far as they are substances, both must of course agree. Qualities of the soul are the emotions and desires, volition and aversion, etc. and knowledge. Knowledge is produced by intellect, which is one of the qualities (faculties) of the soul. Intellect is again fourfold, it is perception, inference, analogy and verbal knowledge. Perception (viz. perception generally, as well of external as of internal objects), is the source from which all other knowledge flows, or rather, without objects of perception the other faculties of intellect have no materials to work upon. All knowledge, that is perceived, is perceived through a medium, through an instrument, by which the soul is in communion either with objects from without or from within itself. External objects are perceived through five external senses, these being in contact with the mind, while internal objects, and

